अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. 252.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. 252.00

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

# यः पलायते स जीवति।

अवतीर्णाः किल अवनीं केचन अदृष्टपूर्वाः जनाः। ते च युष्मान् अन्विष्यन्ति अनुसरन्ति च। हन्त हन्त युष्माकं मार्गोऽपि सुदुस्तरः। नानाविधैः विघ्नैः पर्याकुलः। क्वचित् अस्ति तस्कराणां त्रासः। क्वचित् च भग्नाः सेतुबन्धाः। यावत् क्वचित् कोने कोने अंतरायाः मार्गोपरोधं कुर्वन्ति। किन्तु का तत्र चिन्ता, यावत् अस्ति युष्माकं सविधे वायुवेगसमं त्वरितचक्रं हॉट व्हील्स – 'फ़ेरारी' संज्ञं यानम्। अस्ति च कोऽपि निर्विघ्नः मार्गः यः युष्मान् सुरक्षितान् गन्तव्यं स्थानं प्रति नेतुं प्रभवति।

फेरारी

उन्मूलितः वृक्षः।
अन्विष्यताम् अन्यः मार्गः।

जीएमसी
मोटर होम
मार्गः निरुद्धः।

अग्रे अस्ति रणयानम्।
तस्मात् पश्चात् गम्यताम्।

शनैः शनैः गम्यताम्।
अग्रेस्ति गतिरोधकः।

उद्ध्वस्तः सेतुबन्धः–
निरुध्दश्च अग्रे मार्गः।

डेटसन 200 SX,
मारुति ८००–
निरुद्धः प्रवासमार्गः।

डबलडेकरयानम् –
कुंठितः
प्रवेशः।

स्क्रॅम्बलर जीप यानम्– अस्थाने स्थापनम्।

सावधानम् –
कुटिलमतयः
तस्कराः।

HTA·1077·94

क्रियताम् उचितं रेखाटनम्। ततश्च पृथक् क्रियतां पत्रमिदम्। तच्च स्वात्मनः नाम, वयः, शालायाः नाम इत्यस्य निवेदनेन सह अधोनिर्दिष्टं संकेतस्थानं प्रति प्रेषितव्यम्। अनेन सह स्वनाम– संकेतस्थानांकितं मुद्रायुतं पत्रावेष्टनं अपि अवश्यं भवितुम् अर्हति। संकेतस्थानम्– (द ग्रेट एस्केप), गेम, ब्लो प्लास्ट लि. (टॉईज डिव्हीजन) लिओ हाऊस, 88-सी, ओल्ड प्रभादेवी रोड, बंबई 400025. सर्वेभ्यः समुचित– प्रवेशपत्रिका –प्रेषकेभ्यः 'हॉट व्हील्स'–यानस्य चित्ताकर्षकं चित्रं संप्रेष्यते। तस्मात् त्वर्यतां त्वर्यताम्।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनुमीयते - Would be guessed
अन्वसरत् - Followed
अर्णवृक्षः - Teak tree
अवगत्य - Having known
अवतरितुम् - To descend
अहोरात्रम् - Day and night
आहतः - Having been beaten
इन्धनतैलम् - Petrol
ईर्ष्या - Jealousy
औपचारिकता - Hospitality
क्रकचः - Cutting instrument
गणः - Group
गलन्तिका - Water-jug
घृतम् - Ghee
चषकः - Tumbler
चित्रोष्ट्रः - Giraffe
तमाखुः - Tobacco
तन्त्रीवार्ता - Telegram
तरक्षुः - Leopard
तापः - Temperature
द्योतयति - Points out
निराश्रयः - Homeless
निर्मानुषः - Uninhabited
पङ्क्तिः - Line
परशुः - Axe
परंधाम - The highest position
प्रकाण्डः - Tree trunk
प्रत्यक्षदर्शी - Eye Witness
प्रवृत्तम् - What has happened
भञ्जनम् - Breaking
भाययति - Threatens
मध्यरात्रम् - Midnight
मातामही - Mother's mother
यन्त्रागारम् - Factory
यवागूः - Rice gruel
लालनम् - Fondling
वलयः - Ring
विग्रहः - Idol
विषण्णः - Grief-striken
व्याक्षिप्तम् - Postponed
स्थगयित्वा - Having stopped
शुश्रूषा - Service (Medical)

# धेनुं विक्रेतुम् इच्छामि

| | |
|---|---|
| I – किं भोः, भवान् धेनोः विक्रयणं कर्तुम् इच्छति इति श्रुतम्। | Hallo, I came to know that you are thinking of selling away your cow! |
| II – आम्। तथा चिन्तयन् अस्मि। | Yes, I am. |
| I – एवं तर्हि अन्यधेन्वाः क्रयणविचारः अपि स्यात् एव। | You may also be thinking of buying another cow then. |
| II – आम्। एतया धेन्वा दीयमानं क्षीरं मम गृहार्थम् अपर्याप्तम्। अतः एतां विक्रीय अपरा अधिकक्षीरदात्री क्रेतव्या इति निर्णीतवान् अस्मि। | Yes. The milk yield from the present cow is not enough for my household. So, I have decided to sell this away and buy another which can give more milk. |
| I – क्रेतुम् इच्छन्तः केऽपि आगताः वा? | Has anyone come forward to buy your cow? |
| II – आम्। द्वित्राः आगताः। किन्तु मया सूचितं मूल्यं दातुं ते सिद्धाः न आसन्। | Yes, two or three people have. But, they are not prepared to pay the price I demand. |
| I – प्रायः भवान् अधिकं मूल्यम् इच्छति इति भाति। | You are probably demanding more! |
| II – अधिकं न इच्छामि। किन्तु योग्यं मूल्यं तु इच्छामि एव। एतावता ये क्रेतुम् आगतवन्तः ते तु न्यूनमूल्येन क्रेतुम् इष्टवन्तः। | I do not want more. But I would like to get the right price. Those who come to buy wanted it cheaper. |
| I – योग्यमूल्येन क्रेता कोऽपि न प्राप्तः चेत्? | Supposing you don't get any one who can give you the right price? |
| II – प्रायः न्यूनमूल्येन तु अहं विक्रयणं न करिष्यामि। मम पत्नीपुत्रादयः एतस्यां धेन्वां विशेषतः स्निह्यन्ति। अतः एतां गृहे एव स्थापयेयम्। प्रतिदिनं किञ्चित् क्षीरं क्रेतव्यं भवेत्। | I may not like to sell it at a lower price. My wife and children are very fond of the cow. I will keep it in the house in that case and buy the extra milk we need every day. |



# चन्दमामा

अगस्ट्-१९९३

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००





# चन्दमामा

संस्थापकः– 'चक्रपाणिः'  सञ्चालकः– 'नागिरेड्डी'


## अध्यापनं श्रेष्ठतमा वृत्तिः खलु?

गते जूनमासस्य ७ दिनाङ्के ब्रिटन्-वेल्स्देशयोः चतुर्दशवर्षीयाः ६ लक्षं बालाः नवतिनिमेषात्मिकायां नूतनायां पठनलेखनपरीक्षायां भागं वोढुम् असमर्थाः जाताः। एतस्य कारणं तु– संस्था(Union)त्रयस्य अध्यापकैः कृतः परिक्षायाः बहिष्कारः। आघातकरीवार्ता खलु एषा!



ब्रिटिषुसर्वकारेण एषा नूतना परीक्षा चिन्तिता आसीत्। ये छात्राः पदवीशिक्षणं प्राप्तुम् इच्छन्ति तैः ततः पूर्वं A–स्तरीया काचित् परीक्षा सम्मुखीकरणीया भवति। तदर्थं तैः वर्षद्वयं यावत् अध्ययनं करणीयम्। A–स्तरीयपरीक्षायाः लेखनसमये बालाः प्रायः १६ वर्षीयाः भवन्ति। सर्वकारस्य आशयः आसीत् यत् सर्वे बालाः A–स्तरीयपरीक्षायाः स्वीकरणार्थं वर्षद्वयस्य अध्ययनं कर्तुम् इच्छन्ति उत न इति परीक्षणीयम्, येन स्वस्य अनिच्छां जानन्तः केचन वृत्तिकौशलप्राप्त्यर्थम् उद्योगप्राप्त्यर्थं वा प्रयत्नं कुर्युः, यस्य च परिणामतः महाविद्यालये विश्वविद्यालये च भारः न्यूनः भवेत् इति।

एतस्याः घटनायाः पृष्टभूमिका एवम् ऊहितुं शक्यते यत् सर्वकारः अध्यापकैः, प्राचार्यैः, संस्थाभिः, पालकैः च सह समालोचनम् अकृत्वा एव एकमुखनिर्णयम् अकरोत्, यस्य च एषः विपरीतः परिणामः सञ्जातः इति। जनबलं धनबलं च विना एतादृशीनां परीक्षाणां निर्वहणम् असाध्यं खलु?

एतद्विषये अस्माभिः श्रुतं यत् ये अध्यापकाः परीक्षायाः बहिष्कारं कृतवन्तः ते– 'परीक्षापद्धतिः दोषपूर्णा अस्ति' इति, 'परीक्षाकारणतः अस्माकम् उपरि महान् कार्यभारः आरोपितः भवति' इति च प्रतिपादितवन्तः इति। एतदपि श्रुतं यत् केचन अध्यापकाः, प्राचार्याः, शालाव्यवस्थापकाः, पालकाः च एतं वादं समर्थितवन्तः इति।

एतावत् तु स्पष्टं यत् ये परीक्षां बहिष्कृतवन्तः, ये च एतत् कृत्यं समर्थितवन्तः तान् विहाय अन्ये सर्वे महान्तं खेदम् अनुभूतवन्तः यत् बहिष्कृतवद्भिः अध्यापकैः छात्राणां हितम्, अभ्युदयः, भाविजीवनं वा न चिन्तितम् एव इति। 'अध्यापन श्रेष्ठतमा वृत्तिः' इति वचनं स्मरतां मनसि तु एषा घटना अवश्यं खेदं जनयेत् एव।

मित्राणि! एतद्विषये भवतु अस्माकम् अपि सहानुभूतिः!


सम्पुटः–१०  जुलै–१९९३  सञ्चिका–४

प्रतिकृतिमूल्यं रू. ४-००  *  वार्षिकं ग्राहकशुल्कं रू. ४८-००




# नामनिर्वचनम्-८

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।]*

**केशवः–** केशवशब्दस्य निर्वचनं बहुभिः प्रकारैः कृतं दृश्यते। क्रमशः पश्याम तावत्–

* कश्च ईशश्च केशौ पुत्रपौत्रौ स्तः अस्य। [क+ईश=केश+व] कः नाम ब्रह्मा। ईशः नाम शम्भुः। पद्मपुराणं वदति– 'शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः (विष्णुः)' इति। एतदाधारेण ब्रह्मा पुत्रः, शम्भुः च पौत्रः इति मत्वा एषा व्युत्पत्तिः प्रदर्श्यते। यस्य शम्भुः पौत्रः, ब्रह्मा च पुत्रः तादृशः विष्णुः एव 'केशवः' इति फलितोऽर्थः।
* प्रशस्ताः अभिरूपाः केशाः सन्ति अस्य इति वा केशवः। सुन्दराः योग्याः केशाः यस्य सन्ति सः केशवः। तथा च निरुक्तिः– 'प्रशस्तनीलकेशत्वात् केशवः परिकीर्तितः' इति।
* केशिनामकस्य दानवस्य वधात् (हननात्) विष्णुः 'केशवः' इति कथ्यते। तथा च प्रमाणश्लोकः विष्णुपुराणस्थः– "यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्दन! तस्मात् केशवनाम्ना त्वं लोके ज्ञेयो भविष्यसि" इति। [केशिन्+वध(हिंसायाम्)=केशवः] हरिवंशग्रन्थः तु पूर्वोक्ताम् एव कथाम् आधारीकृत्य किञ्चिद्भिन्नतया व्युत्पत्तिं दर्शयति– 'केशं=केशिनं वाति=हन्ति इति केशवः [केश+वा+क]।
* के जले शववत् भाति (प्रलयकाले क्षीरोद-शायितया) इति केशवः। प्रलयकाले विष्णुः क्षीरसमुद्रे शववत् शयनं करोति इत्यतः सः केशवः।
* कः=ब्रह्मा, अः=विष्णुः, ईशः=शम्भुः। कश्च अश्च ईशश्च केशाः=त्रिमूर्तयः। ते यस्य वशो वर्तन्ते सः केशवः।

एवं केशवशब्दस्य बहुविधा व्युत्पत्तिः प्रदर्शिता दृश्यते। विष्णौ प्राधान्येन रूढः एषः शब्दः अन्येषु अपि द्वित्रेषु अर्थेषु प्रयुक्तः दृश्यते। तथा च हेमकेशो– "केशवः केशसंयुते। पुन्नागे वासुदेवे च" इति।

---

**सूचना–** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.**

वार्ताविशेषः-

# श्रीकाञ्चिकामकोटि-पीठाधिपतिः

श्रीकाञ्चिकामकोटिपीठाधिपतीनां श्री श्री चन्द्रशेखरेन्द्रसरस्वतीमहास्वामिनां शतवर्ष-जयन्तीसमारोहस्य आरम्भः गते मे-मासे जातः। भक्तैः निश्चितं यत् एकं वर्षं यावत् एषः उत्सवः महता वैभवेन आचरणीयः इति। प्रायः तादृशः कोऽपि पीठाधिपतिः न स्यात् यश्च चन्द्रशेखरेन्द्रमहास्वामिनः इव सुदीर्घं पीठाधिपत्यजीवनं यापितवान् स्यात्।

परमाचार्याः एते स्वामिनः ८६ वर्षेभ्यः पूर्वम् आदिशङ्कराचार्यस्य उत्तराधिकारित्वेन काञ्चीपुरमठस्य ६८ तम-पीठाधिपतित्वेन च नियुक्ताः अभवन्। एतेषाम् एषा नियुक्तिः अतिविचित्रे सन्दर्भे जाता। ६६ तमाचार्याः श्री चन्द्रशेखरसरस्वतीस्वामिनः १९०६ तमे वर्षे द्वादशवर्षीयं स्वामिनाथनामकं बालकं दृष्टवन्तः। बालकस्य नेत्रयोः दृश्यमानया कान्त्या एते नितराम् आकृष्टाः अभवन्। तैः अभिज्ञातं यत् जगद्गुरुत्वं प्राप्तुम् अपेक्षितानि सर्वाणि लक्षणानि एतस्मिन् सन्ति इति। स्वपार्श्वे स्थितान् पण्डितान् ते उक्तवन्तः यत् एषः बालकः अग्रे काञ्चिमठस्य अधिपतिः भविष्यति इति।

एतदनन्तरवर्षे ६६ तमाः आचार्याः काञ्चिसमीपस्थे 'कलवै'नामके ग्रामे परं धाम गताः। तत्समये स्वामिनाथः दिण्डिवननामके ग्रामे विद्याभ्यासे निरतः आसीत्। स्वामिनाथस्य पितृष्वसुः पुत्रः इतः पूर्वम् एव काञ्चिस्वामिनां निकटे आसीत् इत्यतः सः एव ६७ तमं पीठाधिपत्यं प्राप्तवान्। एतत् ज्ञात्वा स्वामिनाथः, पुत्रस्य संन्यासग्रहणात् विषण्णां विधवां पितृभगिनीं सान्त्वयितुं प्रस्थितया मात्रा सह स्वयम् अपि प्रस्थितः।

यदा तौ काञ्चिपुरं गतवन्तौ तदा कश्चन संन्यासी स्वामिनाथं मातुः पृथक्कृत्य कलवैग्रामं नीतवान्। मार्गे स्वामिनाथेन ज्ञातं यत् नूतनः पीठाधिपतिः अपि तीव्रम् अस्वस्थः इति। तेन संन्यासिना साग्रहम् उक्तं यत् इदानीं भवता ६८ तम पीठाधिपत्यं निर्वोढव्यम् इति। एतस्य तात्पर्यम् एतत् आसीत् यत् स्वामिनाथेन तस्मिन् एव क्षणे प्रापञ्चिकमोहः पारिवारिकबन्धनं च उन्मूलनीयम् इति।

एषा घटना यदा स्मारिता तदा परमाचार्यैः उक्तम्– "कल्पनातीतायाः एतस्याः घटनातः अहं तत्काले नितराम् आश्चर्यचकितः आसम्। वृषभशकटे उपविश्य रामनामस्मरणं कुर्वन् अहं गन्तव्यं स्थानं प्राप्तवान्" इति।

तन्त्रीवार्ताद्वारा पीठाधिपत्यस्वीकारविषये पितुः अनुमतिः प्राप्ता स्वामिनाथेन। १९०७ तमे वर्षे फेब्रवरीमासे १७ दिनाङ्के स्वामिनाथः काञ्चिकामकोटिपीठस्य ६८ तम-पीठाधिपतित्वेन नियुक्तः अभवत्। ६६ तमाचार्यस्य नाम एव प्राप्तम् एतेन।

तारुण्ये वयसि स्थिताः चन्द्रशेखरेन्द्रसरस्वतीस्वामिनः अग्रे निर्वोढव्यस्य महाभारस्य निर्वहणार्थम् अपेक्षितां शक्तिं बुद्धिबलं च वर्धयितुम् इच्छन्तः एकान्ते विद्याभ्यासे तपसि च निमग्नाः अभवन्। लोककल्याणम् इच्छन्तः ते अहोरात्रम् आध्यात्मिकमार्गगामिनः जाताः।

१९०९ तमवर्षतः आरभ्य एकविंशतिं वर्षाणि यावत् आदिशङ्कराचार्यम् अनुकुर्वन्तः एते पादयात्रया 'दिग्विजयं' कृतवन्तः। दूरादिकम् अविगणय्य तैः पादयात्रा कृता। अनिवार्ये सन्दर्भे ते शिबिकायाम् उपविश्य प्रयाणम् अनुवर्तयन्ति स्म।

परमाचार्यः पाण्डित्येन अद्वितीयः। ल्याटिन्, फ्रेञ्च्, ग्रीक्, इत्यादिषु १७ भाषासु तेन पाण्डित्य प्राप्तम् आसीत्। एतम् अधिकृत्य ग्रीक्राजमाता अवदत्– 'निर्मलाध्यात्मिकस्वरूपाः ते" इति। राजमातुः पुत्री उक्तवती– "तेषां दर्शनं सम्पूर्णतादर्शनम् इव" इति। अमेरिकादेशीयः प्रमुखः राजदूताधिकारी कश्चित् परमाचार्यवर्यम् एवं वर्णयति– "सः तु संन्यासिनां प्रभुः" इति।

१९२७ तमे वर्षे गान्धिवर्यः परमाचार्येण सह वार्तालापं कुर्वन् आसीत्। तदा राजाजीवर्यः आगत्य गान्धिवर्यं स्मारितवान् यत् भोजनसमयः उपस्थितः इति। तदा गान्धिवर्येण उक्तम्– "परमाचार्येण सह वार्तालापः एव परमोत्कृष्टं भोजनम्" इति।

यः ८४ वर्षाणि जीवति तेन सहस्रं पूर्णिमाः दृष्टाः भवन्ति इति विश्वस्यते। एतदर्थं सुवर्णशताब्दाभिषेकस्य आचरणं लोके दृश्यते। किन्तु काञ्चिपरमाचार्येण शतं वर्षाणि यापितानि। अतः शिष्यैः निर्णीतं यत् एतन्निमित्तकः 'शताब्दमहोत्सवः' सवैभवम् आचरणीयः इति।

'जीवनतः मया किम् अधीतम्?' इत्येतन्नामके लेखने परमाचार्यवर्येण एवम् उक्तम् अस्ति– "भगवान् परहितनिमित्तम् एव कांश्चन जनान् सृजति इत्येषा नीतिः मया जीवनात् प्राप्ता" इति।

**परमाचार्यस्य उपदेशाः**

विविधधर्मसिद्धान्तेषु आचार-व्यवहारेषु च भेदः सहजः। भेदः न दोषाय। सर्वे अपि एकेन एव प्रकारेण आचरेयुः व्यवहरेयुः च इति अपेक्षा सर्वथा अनुचिता। किन्तु सर्वेषु समरसता स्यात्, परस्परप्रीतिः स्यात्, ऐकमत्यं च स्यात्।

इदानीं लोके अनुशासनं न दृश्यते, क्रमानुसारं किमपि न प्रचलति अपि। लक्ष्यहीनतया कार्यं क्रियमाणं दृश्यते। एतादृश्यां स्थितौ जीवनं कष्टकरम् एव। अतः जीवने अनुशासनम् अत्यावश्यकम्। जीवने अनुशासनस्य पालनं, निरन्तरम् अनुसरणं च कश्चन उत्तमः गुणः। अन्यस्य क्लेशः यथा न भवेत् तथा व्यवहरद्भिः अस्माभिः स्वकर्तव्यानि उत्तरदायित्वानि च सावधानं भक्त्या यदा निरुह्यन्ते तदा एव अनुशासनं पालितं भवेत्। अनुशासनम् अस्मान् सत्कार्येषु प्रेरयति, ततः अस्माकं हृदयं निर्मलं भविष्यति, तेन वयं तृप्तिं प्राप्स्यामः।





# श्वश्रू-स्नुषासम्बन्धः

शारदपुरनामके ग्रामे पूर्वं विभूषणः नाम कश्चन भूस्वामी आसीत्। तस्य पत्नी सुभद्रा। सुभद्रायाः स्वभावः कठोरः। परनिन्दनं, दोषैकदर्शनं, कटुवचनकथनम् इत्यादयः तस्याः स्वभावाः। विवाहानन्तरं यदा पत्न्याः स्वभावः ज्ञातः तदा विभूषणः पत्नीं परिष्कर्तुं बहुधा प्रयत्नं कृतवान्। किन्तु सुभद्रा पत्युः सज्जनतां मृदुतां च जानती पतिवचनं तृणीकृतवती। अन्ते विभूषणः 'एतस्याः परिष्कारः सर्वथा असाध्यः' इति मौनम् आश्रितवान्।

सुभद्रा-विभूषणयोः तिस्रः पुत्र्यः एकः पुत्रः च जाताः। पुत्रीषु ज्येष्ठे उभे अपि मातुः स्वभावम् एव अनुकृतवत्यौ। किन्तु कनिष्ठा पुत्री चन्द्रा एतादृशी न आसीत्। बाल्ये एव पुत्र्याः एषः स्वभावः ज्ञातः सुभद्रया। 'मम पत्री मादृशी एव स्यात्' इति चिन्तयन्ती सा स्वस्वभावं पुत्र्याम् आनेतुं विशेषप्रयत्नं कृतवती। बहुधा उपदिष्टवती अपि। एतस्य परिणामतः चन्द्रा अपि कटुवचनानि वक्तुं, ज्येष्ठानां वचनेषु अनादरं प्रकटयितुं च यदा उद्युक्ता तदा विभूषणः पुत्र्याः परिष्कारम् इच्छन् सद्व्यवहारान् बोधितवान्। एवं परस्परविरुद्धयोः उपदेशयोः श्रवणात् किं समीचीनम्, कथं व्यवहरणीयम् इति निर्णेतुम् अशक्नुवती चन्द्रा महत् कष्टम् अनुभवति स्म।

चन्द्रा यदा प्राप्तवयस्का जाता तदा माता सुभद्रा पतिम् अपृष्ट्वा पुत्र्याः विवाहं निश्चितवती। चन्द्रायाः भावी पतिः केशवः विद्यावान्, भूस्वामिनः कार्यालये उद्योगी च आसीत्। तदीयः पिता दिवङ्गतः आसीत्। यदि चन्द्रा केशवस्य पत्नी भविष्यति, तर्हि सा सुखेन जीविष्यति इति चिन्तितवती सुभद्रा।

चन्द्रायाः सखी विमला कदाचित् सुभद्रायाः गृहम् आगतवती। वर्षात् पूर्वं विमला विवाहिता आसीत्। चन्द्रा विमला च यदा परस्परं वार्तालापं कुर्वत्यौ आस्ताम्, तदा सम्भाषणमध्ये सुभद्रा विमलां पृष्टवती– "कथम् अस्ति भवत्याः वैवाहिकजीवनम्?" इति।

"अहं सुखेन अस्मि" इति विमला यद्यपि उक्तवती, तथापि सुभद्रा विमलां पुनः पुनः तस्याः कुटुम्बविषये पृच्छन्ती वैयक्तिकविषयान् अपि वाचितवती।

वस्तुतः तु विमलायाः गृहे विशेषसुखं न आसीत्। विमलायाः श्वश्र्वाः कोपस्वभावः। स्नुषा यत् करोति तत्र सर्वत्र दोषं पश्यति स्म सा। एतेन विमला मनसि एव खेदम् अनुभवति। किन्तु प्रत्यक्षं तु हसन्मुखी एव तिष्ठन्ती गृहकार्याणि निर्वहति। कदाचित् सा पतिं स्वकष्टं निवेदितवती। तदा पतिः उक्तवान् यत् ज्येष्ठायाः वचनस्य पालनं स्नुषायाः भवत्याः धर्मः, अतः भवती एव किञ्चित् विनयेन व्यवहरतु इति। इदानीं किं वा करणीयं विमलया? मम भाग्यम् एव एतादृशम् इति चिन्तयन्ती सा मौनम् आश्रितवती। स्वदुःखं मातृगृहे अपि न उक्तवती। एवं निगृहीतं दुःखं सुभद्रायाः पुरतः सर्वं प्रकटितम् अभवत्।

एतत् सर्वं श्रुत्वा सुभद्रा उक्तवती– "विमले, श्वश्र्वाः गृहे स्नुषया धैर्येण भवितव्यम्, न तु भयेन" इति।

वार्तालापं समाप्य किञ्चित्कालानन्तरं



विमला स्वगृहं गतवती। विमलायाः गमनानन्तरं सुभद्रा पुत्रीं चन्द्राम् उक्तवती– "विमलायाः विषयं ज्ञातवती किल! विवाहानन्तरं भवती यदा श्वश्रूगृहं गमिष्यति तदा श्वश्र्वाः वचनं मा शृणोतु। किञ्चित् धाष्ट्र्येन एव भवत्या सा निग्रहणीया। सा भवत्याः वचनं यथा पालयेत् तथा करणीयम्।" इति।

मातुः वचनं श्रुत्वा चन्द्रा चिन्तितवती– 'सत्यम्। आरम्भे एव श्वश्र्वाः विषये जागरूकतया भवितव्यम्। तदा एव अहं सुखेन जीवितुं शक्नुयाम्। नो चेत् ममापि विमलायाः परिस्थितिरेव भवेत्' इति।

केषुचित् दिनेषु एव चन्द्रा-केशवयोः विवाहः वैभवेन सुसम्पन्नः। चन्द्रायाः श्वश्रूः पार्वती अत्यन्तं साध्वी। सा सर्वैः सह स्नेहेन व्यवहरति। चन्द्रा यस्मिन् दिने श्वश्रूगृहं प्राप्तवती तस्मिन् दिने सायङ्कालसमये पाकशालायां स्थिता पार्वती चन्द्राम् उक्तवती– "दीपं ज्वालयतु" इति।

किन्तु चन्द्रा दीपं न ज्वालितवती। किञ्चित्कालानन्तरं पार्वती बहिः आगत्य पृष्टवती– "किं भोः, दीपं ज्वालयतु इति मया उक्तम्। न श्रुतवती वा?" इति।

तदा स्नुषा उक्तवती– "मम माता माम् अत्यन्तं प्रीत्या पालितवती। मद्द्वारा किमपि कार्यं न कारयति स्म सा" इति।

तदा पार्वती– "तत् भवत्याः मातृगृहम्।





तत्र तु भवती बालिका इव। किमपि कार्यं न करोति चेत् अपि चलति। किन्तु एतत् भवत्याः श्वश्रूगृहम्। भवत्या एव सर्वं निर्वोढव्यम् अत्र'' इति उक्तवती।

एवं तद्दिनादारभ्य तयोर्मध्ये कलहः आरब्धः। श्वश्रूः यत्किमपि वदति चेत् अपि तद्विरुद्धम् आचरति स्नुषा। एतेन कुपिता पार्वती चन्द्रां तर्जयति।

पत्न्याः मातुः च समञ्जनं न भवति इति केशवः ज्ञातवान्। पत्न्याः व्यवहारः न उचितः इति पतिः जानाति। यदि पतिः हितवचनं वदति तर्हि चन्द्रा कुपिता भवति। एतेन कारणेन पतिपत्न्योर्मध्ये अपि कलहस्य आरम्भः जातः।

एतादृशपरिस्थित्यां सखी विमला कुशलं विचारयितुं चन्द्रायाः गृहम् आगतवती। तदा चन्द्रा श्वश्र्वाः गृहम् यदा आगतं तदारभ्य प्रवृत्तम् सर्वं निवेद्य– 'मम गृहे सामरस्यं नास्ति' इति स्वदुःखं प्रकटीकृतवती।

चन्द्रायाः विषयं सर्वं श्रुत्वा चकिता विमला उक्तवती– ''एतादृशीम् उत्तमां श्वश्रूं प्राप्तवती भवती इति तु सौभाग्यम्। सा दुष्टा न। भवती एव तया सह कलहप्रिया इव व्यवहरति'' इति।

''एवं वा? मम विवाहात् पूर्वं यदा भवती मम गृहम् आगतवती तदा भवत्या उक्तम् आसीत् किल– भवत्याः श्वश्रूः भवतीं बहुधा पीडयति इति। एतत् सर्वं श्रुत्वा मम माता मां बोधितवती– 'श्वश्रूः यथा वदति तथा मा शृणोतु। आरम्भतः एव तां दूरे स्थापयतु' इति। अतः अहं मातुः वचनम् एव पालयन्ती अस्मि'' इति उक्तवती चन्द्रा।

चन्द्रायाः मनःस्थितिं ज्ञात्वा विमला तां बोधितवती– ''मम श्वश्र्वाः भवत्याः श्वश्र्वाः च तुलनां मा करोतु। अविवेकेन भवत्याः माता यत् बोधितवती तत् विस्मरतु। भवत्याः श्वश्रूः उत्तमा इति अहं जानामि। भवत्याः भाविजीवनस्य निर्मात्री भवती एव। अतः सर्वप्रथमं भवती कार्येषु सोत्साहं स्वयंप्रवृत्तिं प्रदर्शयन्ती श्वश्रूप्रीतिं सम्पादयतु। तदा भवत्याः जीवनं नन्दगोकुलसदृशं भवेत्'' इति।

विमलया उक्तं सर्वं श्रद्धया श्रुत्वा चन्द्रा उक्तवती– "अस्तु, कानिचन दिनानि भवत्याः वचनं पालयामि" इति।

अनन्तरदिने चन्द्रा प्रातःकाले शीघ्रम् एव उत्थाय स्नातवती। पाकशालां प्रविश्य पाके श्वश्र्वाः साहाय्यं कर्तुम् उद्युक्ता च। एतेन श्वश्रूः पार्वती अतीव सन्तुष्टा।

अनन्तरदिने प्रातः श्वश्रूः गृहस्य मुखद्वारं प्रक्षाल्य यदा रङ्गवल्लीं लेखितुम् उद्युक्ता तदा चन्द्रा तत्र आगत्य 'अम्ब, अहं रङ्गवल्लीं लिखामि' इत्युक्त्वा रङ्गवल्लीं लिखितवती। एवं तस्मिन् दिने सा बहुषु गृहकार्येषु श्वश्र्वाः साहाय्यं कृतवती। एतस्य परिणामतः तदनन्तरदिने श्वश्रूः मार्गे ये ये गच्छन्ति तान् परिचितान् सर्वान्– "पश्यन्तु, मम स्नुषा कियत्सुन्दरं रङ्गवल्लीं लिखितवती" इति वदन्ती स्नुषायाः प्रशंसां करोति स्म। एतत् श्रुतवत्याः चन्द्रायाः श्वश्रूविषये अभिमानः उत्पन्नः। अल्पे एव काले चन्द्रा श्वश्र्वाः प्रिया स्नुषा जाता।

कानिचन दिनानि अतीतानि। चन्द्रा गर्भवती जाता। एतत् ज्ञात्वा श्वश्रूः अतीव सन्तुष्टा। सा स्नुषायै एकं कार्यम् अपि कर्तुम् अवकाशं न ददाति। 'भवती कार्यं मा करोतु। इदानीं भवत्या विश्रान्तिः स्वीकरणीया' इति वदन्ती स्नुषां मञ्चे उपवेशयति। श्रद्धया स्नुषायाः सेवां करोति।

श्वश्र्वाः एतादृशं प्रीत्यतिशयं दृष्ट्वा कदाचित् चन्द्रा– "अम्ब! मम महत् कष्टम् आपतितम् इव चिन्तयन्ती भवती मम सेवां कुर्वती अस्ति खलु? यदि एषा प्रवृत्तिः अनुवर्तेत तर्हि अग्रे कदाचित् कवलस्य मुखे स्थापनम् अपि स्नुषायाः कष्टाय भवेत् इति भावयन्ती भवती कवलं सज्जीकृत्य मम मुखे स्थापयेत्" इति हसन्ती उक्तवती।

तदा पार्वती अपि मन्दहासपूर्वकम् उत्तरं दत्तवती– "यदि भवादृशी उत्तमा स्नुषा प्राप्येत तर्हि श्वश्रूः कवलं सज्जीकृत्य अवश्य स्नुषायाः मुखे स्थापयेत् एव" इति।



# हिंसाप्रवृत्तिः

विधातृपुरस्य महाराजस्य विकटसेनस्य हिंसात्मिका प्रवृत्तिः। युद्धकरणम्, कारागृहे ये बन्धिताः सन्ति तेषां निर्दयं मारणम्, पूजायाः व्याजेन मूकप्राणिनां बलिदानम् इत्यादयः तस्मै अतीव रोचन्ते स्म।

मन्त्रिणः धर्मसेनस्य हितवचनम् अपि न शृणोति राजा। अतः "यथा राजा तथा प्रजाः" इति वचनानुसारं प्रजासु अपि हिंसाप्रवृत्तिः आरब्धा।

एवं स्थिते मन्त्री धर्मसेनः कदाचित् सत्यानन्दनामकं संन्यासिनं राजास्थानं प्रति आहूतवान्। सत्यानन्दः आस्थानम् आगतवान्। सः वेदपुराणादिषु उपनिषत्सु च स्थितान् अनेकान् विषयान् कथारूपेण विवृण्वन् 'अहिंसा किमर्थम् आचरणीया, हिंसा किमर्थं त्याज्या' इति रमणीयतया विवरणं कृतवान्।

अनन्तरं राजा विकटसेनः संन्यासिनं नमस्कृत्य प्रार्थितवान्– "स्वामिन्, भवान् मम गुरुः। दक्षिणारूपेण किं ददामि? कृपया आज्ञापयतु" इति।

तदा संन्यासी मन्दहासपूर्वकम् उक्तवान्– "हे राजन्, भवतः राज्ये हिंसा नृत्यन्ती अस्ति। भवान् भवतः प्रजाः च हिंसां त्यजन्तु। सा एव मया अपेक्ष्यमाणा महती गुरुदक्षिणा" इति।

"तथैव आचरामि" इत्युक्त्वा विकटसेनः अनुक्षणं सेनाधिपतिम् आहूय उक्तवान्– "सेनापते, अद्य आरभ्य राज्ये सर्वैः अपि अहिंसा पालनीया। तथैव प्रकटनं करोतु। यदि कोऽपि अहिंसां न पालयति, तर्हि सः तत्रैव निर्दयं मारणीयः। एषा मम आज्ञा" इति।

राज्ञः वचनं श्रुत्वा धर्मसेनः सत्यानन्दः च किं वक्तव्यम् इति अजानन्तौ मौनं स्थितवन्तौ।





# विचित्रं पुष्पम्

## ३

(राजगुरुः गौरीनाथः राजानं प्रतापवर्माणं, युवराज्ञीं प्रियंवदां च 'शताब्दिकापुष्पस्य' पूर्वकथां विस्तरेण निवेदितवान्। माणिक्यपुर्याः दक्षिणप्रान्ते समुद्रतीरे स्थिताः ग्रामाः हठात् भूमिसमाः जाताः इति, जनाः दिग्भ्रान्ताः भीताः च सन्तः ततः धावन्तः सन्ति इति च राजानं निवेदितवान् सेनाधिपतिः गम्भीरसिंहः। तदनन्तरम्....)

समुद्रतीरे स्थिताः ग्रामाः किमर्थं भूमिसमाः जाताः इति तु केनापि न ज्ञातम्। अग्रे किं करणीयम् इत्यपि न ज्ञातम्। अपरा रात्रिः यथापूर्वं शान्ततया अपगता। महती वृष्टिः, समुद्रतरङ्गाणाम् उद्गमः वा न जातः। तथापि प्रातः जनैः दृष्टं यत् बहूनि गृहाणि भूमिसमानि जातानि इति। गृहनाशस्य कारणविषये विविधान् ऊहान् कुर्वन्तः, 'यदि वयम् अत्र वसेम तर्हि अस्माकम् अपि अपायः अवश्यं भवेत्' इति चिन्तयन्तः च जनाः भीत्या कम्पमानाः सन्तः ग्रामं परित्यज्य धावितवन्तः।

एवम् आगताः केचन राजधानीं प्राप्तवन्तः। नगरस्य मुख्यद्वारे स्थिताः भटाः एतं विषयं सेनाधिपतिं निवेदितवन्तः। सेनाधिपतेः आज्ञायाः अनुगुणं सैनिकाः तान्



वसतिशिबिरं प्रापितवन्तः। दक्षिणभागात् आगताः आश्रयहीनाः पुनः केचन देवालयस्य प्राङ्गणे वासं कृतवन्तः। अन्ये केचन वसन्तोत्सवार्थं यत्र मण्डपादिकं निर्मितम् आसीत् तस्मिन् प्राङ्गणे वासं कृतवन्तः।

युवराज्ञी प्रियंवदा सखीभिः सह समालोचितवती यत् राजभवनस्य के के भागाः आश्रयहीनानां वसत्यर्थम् उपयोक्तुं शक्येत इति। ततः भवनस्य कांश्चन भागान् रिक्तीकृत्य वसतियोग्यान् कारितवती सा। एतावता एव मध्यरात्रः अतीतः आसीत्।

प्रातःकाले राजा प्रतापवर्मा सेनाधिपतिना गम्भीरसिंहेन सह निराश्रयानां वसतिव्यवस्था कथम् अस्ति इति द्रष्टुं गतवान्। यदा राजा शिबिरसमीपम् आगतः तदा निराश्रयाः जनाः दैन्येन उक्तवन्तः– "महाप्रभो, गृहं, वस्तूनि, धेनूः चापि तत्रैव परित्यज्य वयं भीत्या पलाय्य अत्र आगताः स्मः। अज्ञातात् अपायात् वयं नितरां भीताः स्मः। दिनद्वयतः गृहाणां नाशः विनाशब्दं प्रचलन् अस्ति। एतत् दृष्टवताम् अस्माकं धैर्यं सर्वथा नष्टम्। न जानीमः– अग्रे का गतिः इति। प्रभुः एव शरणम् अस्माकम्" इति।

"भवतां रक्षणं मम कर्तव्यम्। भवतां प्राणानां, सम्पत्तेः, च काऽपि हानिः न भविष्यति। सर्वविधाः रक्षणव्यवस्थाः क्रियमाणाः सन्ति। भवन्तः निश्चिन्ताः भवन्तु" इति प्रजाः उक्त्वा विविधानि सान्त्वनवचनानि उक्तवान् राजा। 'रक्षणार्थं का व्यवस्था एतावता कृता इति वदतु' इति सेनाधिपतिं नेत्रसङ्केतेन सूचितवान् च।

तदा सेनापतिः उक्तवान्– "ह्यः एव केचन सैनिकाः दक्षिणप्रान्तं गताः सन्ति। या काऽपि विपत्तिः भवतु, तां सम्मुखीकर्तुं सिद्धाः सन्तः गताः ते। ग्रामस्थानां यानि गृहाणि, क्षेत्रादीनि, सम्पत्तयः च सन्ति तेषां रक्षणे ते निरताः भवन्ति। रात्रिकाले एकः गणः रक्षणं करोति। दिने अपरः गणः रक्षणं करोति। एवं रक्षणं तु अहोरात्रं प्रचलिष्यति। अतः एतैः स्वगृहादीनां रक्षणस्य विषये चिन्ता करणीया नास्ति प्रभो" इति।

"साधु, साधु" इति सन्तोषं प्रकटितवान्

राजा।

"प्रभो, निराश्रयानां महिलानां बालानां च निमित्तं युवराज्ञी राजभवनस्य पश्चिमभागे व्यवस्थां कृतवती अस्ति। सर्वाः व्यवस्थाः स्वयं परिशील्य मध्यरात्रस्य अनन्तरं युवराज्ञी शयनं कृतवती इति वार्ता श्रुता मया" इति निवेदितवान् सेनाधिपतिः।

"दीनदुर्बलानां साहाय्यं करणीयम् इति भावः बाल्यादेव युवराज्ञ्याः आसीत् एव। अस्तु तावत्। तत्रत्यां व्यवस्थां वयं स्वयं परिशील्य आगच्छाम तावत्" इति उक्तवान् राजा।

"यथाज्ञापयति प्रभुः" इति अङ्गीकारं सूचितवान् सेनाधिपतिः। ततः तौ राजभवनम् उद्दिश्य गतवन्तौ।

तौ यदा प्रासादस्य पश्चिमभागं गतवन्तौ तदा तत्र महिलाः गणरूपेण स्थित्वा उपविश्य वा जल्पनं कुर्वत्यः आसन्। स्वगृहे यथा स्वच्छन्दं स्थीयते तथैव स्थिताः आसन् ताः। 'मातृगृहम् आगताः वयम्' इति भावः आसीत् तासां मनसि। बालाः तु प्रासादस्य अङ्गणे गृहे इव क्रीडायां निमग्नाः आसन्। एतत् सर्वं दृष्ट्वा राजा नितरां सन्तुष्टः।

तावता काचित् परिचारिका तत्रत्यान् बालान् महिलाः च उद्दिश्य आदरेण उक्तवती– "पाकः सिद्धः अस्ति। भोजनपत्राणि प्रसारितानि सन्ति। सर्वैः भोजनार्थम् आगन्तव्यम्" इति। ततः सर्वे भोजनपङ्क्तौ उपविष्टवन्तः। परिचारिकाः आहारपदार्थान् परिवेषितवत्यः। सर्वे





सन्तोषेण भोजनं कुर्वन्तः आसन्। प्रियंवदा समग्रव्यवस्थायाः परिशीलनं कुर्वती आसीत्।

परिशीलनकार्ये व्यग्रां पुत्रीम् उक्तवान् राजा– "प्रियंवदे, भवत्याः प्रजाप्रीतिः प्रशंसार्हा अस्ति। कष्टपीडितानां साहाय्येन एव जीवनस्य सार्थकता सिद्ध्यति। एतत् अवगत्य तदनुगुणं कार्यं कुर्वत्याः भवत्याः दर्शनतः अहं महान्तं सन्तोषम् अनुभवामि। भवतीं पुत्रीत्वेन प्राप्य अहम् आत्मनः धन्यताम् अनुभवामि। भवत्या कृतां सेवां प्रजाः आजीवनं स्मरिष्यन्ति। यावत् एते अत्र स्थास्यन्ति तावत् एतेषां योगक्षेम-निर्वहणभारः भवत्याः एव भवतु" इति।

तदा युवराज्ञी अङ्गीकारपूर्वकं शिरः चालयन्ती मन्दहासपूर्वकं– "अत्रत्यायाः व्यवस्थायाः विषये भवतः चिन्ता काऽपि मास्तु। व्यवस्थायां कोऽपि लोपः यथा न भवेत् तथा अहं निर्वक्ष्यामि। अन्यत्र निर्वोढव्यायाः व्यवस्थायाः विषये भवान् चिन्तयतु" इति विनयेन उक्तवती।

राजा सेनाधिपतिः च ततः निर्गत्य प्रासादस्य मुख्यद्वारस्य समीपं गतवन्तौ। तावता चत्वारः भटाः तयोः अभिमुखम् आगताः। तेषां मुखे चिन्ता, खेदः, विषादः च स्फुटतया दृश्यते स्म।

"किमर्थम् एतादृशी स्थितिः भवताम्? किं प्रवृत्तम्?" इति आश्चर्येण पृष्टवान् सेनापतिः।

"ह्यः दक्षिणप्रान्तं गताः अस्माकं सैनिकाः अदृश्यतां गताः सन्ति। ते कुत्र गताः इत्येव न ज्ञायते" इति निवेदितवन्तः सैनिकाः।

"कथम् एतत्? तेषां का गतिः जाता?" इति भीत्या आतङ्केन च पृष्टवान् सेनाधिपतिः।

"तेषां का गतिः जाता स्यात् इति कोऽपि न जानाति। दक्षिणप्रान्तः इदानीं सर्वथा निर्मानुषः अस्ति। समीपस्थाः पुनः केचन ग्रामाः अपि भूमिसमाः जाताः सन्ति" इति उक्तवन्तः सैनिकाः।

"तदस्तु, प्रातः इतः गताः सैनिकाः तत्रैव सन्ति, उत ततः प्रत्यागताः?" इति पृष्टवान्

सेनाधिपतिः।

"तेषु त्रयः आगत्य वार्तां निवेद्य प्रतिगताः। तैः सह अस्माकं दलनायकः वीरसिंहवर्यः अपि गतवान् अस्ति" इति उक्तवन्तः सैनिकाः।

"भवतु। वीरसिंहः यदा प्रत्यागमिष्यति तदा सः वक्तव्यः यत् अचिरात् एव अहं द्रष्टव्यः इति" इति आज्ञापितवान् सेनाधिपतिः।

"यथाज्ञापयति भवान्" इति उक्त्वा ततः निर्गतवन्तः सैनिकाः।

"पुनरपि गृहाणि भूमिसमानि जातानि सन्ति इति वार्ता श्रुता चेत् जनाः अधिकं भीताः भवेयुः। अतः एतस्य अन्यत्र कथनं मास्तु। दलनायकः यदा प्रत्यागमिष्यति तदा अग्रिमनिर्णयविषये चिन्तनं करणीयम्। प्रायः सैन्यं प्रेषणीयम् अपि भवेत्। अतः सैन्यं सन्नद्धस्थितौ भवतु" इति उक्तवान् राजा।

"तथैव भवतु। सेनां सज्जीकरिष्यामि। दलनायकस्य आगमनस्य अनन्तरं भवन्तं पुनः द्रक्ष्यामि" इति उक्त्वा सेनाधिपतिः ततः निर्गतवान्।

सैनिकैः सह दक्षिणप्रान्तस्थं समुद्रतीरं गतः दलनायकः वीरसिंहः सायङ्काले प्रत्यागत्य सेनाधिपतिं दृष्ट्वा नमस्कृत्य स्थितवान्।

"किमर्थं भवतः मुखं तेजोहीनं दृश्यते? किं प्रवृत्तं तत्र?" इति कुतूहलेन पृष्टवान् सेनाधिपतिः।

"सर्वम् आश्चर्यकरम् अस्ति। ह्यः इतः गताः सैनिकाः समुद्रतीरं प्राप्तवन्तः इत्यत्र नास्ति सन्देहः। यतः तेषां पदचिह्नानि





समुद्रतीरे स्फुटं दृश्यन्ते। किन्तु तदनन्तरं किं प्रवृत्तम् इति तु न ज्ञायते। स च प्रदेशः इदानीं निर्मानुषः अस्ति। अतः प्रत्यक्षदर्शी अपि कोऽपि नास्ति'' इति उक्तवान् दलनायकः।

''एवं तर्हि इदानीं तत्र कीदृशी व्यवस्था अस्ति?'' इति पृष्टवान् सेनाधिपतिः।

''समुद्रतीरे त्रिषु गणेषु सैनिकाः नियोजिताः सन्ति। एकः गणः समुद्रतीरे तिष्ठति। अपरः गणः ततः अनतिदूरे तिष्ठति। अन्यः गणः ततोऽपि अल्पे दूरे तिष्ठति। एते त्रयः गणाः तदा तदा वार्ताविनिमयं कुर्वन्तः अतिजागरूकतया रक्षणं कुर्वन्तः सन्ति। यदि भवतः अनुज्ञा स्यात् तर्हि अहं श्वः प्रातः पुनरपि तत्र गत्वा परिस्थितिं परिशील्य आगच्छेयम्'' इति विनयेन उक्तवान् दलनायकः।

''भवतु, तथैव करोतु'' इति अनुज्ञां दत्तवान् सेनाधिपतिः। अनन्तरं सः वस्तुस्थितिं राजानं निवेदयितुं, निराश्रयानां व्यवस्थां द्रष्टुं च ततः निर्गतवान्।

निराश्रयानां जनानां वसतिभोजनादिषु कोऽपि लोपः न दृश्यते स्म। न केवलं राजभटाः, अपि तु नागरिकाः अपि निराश्रयानां साहाय्यं कुर्वन्तः आसन्। एतत् दृष्टवतः सेनाधिपतेः सन्तोषः जातः।

अनन्तरदिने प्रातः एव दलनायकः सेनाधिपतेः गृहम् आगतवान्। तं दृष्ट्वा पृष्टवान् सेनाधिपतिः– ''एतावता एव गत्वा आगतं वा भवता? कथम् अस्ति तत्रत्या स्थितिः?'' इति।

''महती भयङ्करी स्थितिः श्रीमन्! मया यदा गतं तदा केचन सैनिकाः मां निवेदितवन्तः यत् स च पिशाचः पुनः आगतः आसीत् इति'' इति उक्तवान् दलनायकः।

''पिशाचः? पिशाचपीडाकारणतः एतत्सर्वं प्रवृत्तं वा?'' इति आश्चर्येण पृष्टवान् सेनाधिपतिः।

''आं श्रीमन्! मध्यरात्रसमये समुद्रभागतः आगच्छन् पर्वताकारः पिशाचः अस्माकं सैनिकैः प्रत्यक्षं दृष्टः इति श्रूयते। सः पिशाचः भूमौ सञ्चरति उत वायौ इति सैनिकैः सम्यक् न लक्षितम्। किन्तु एतावत् तु लक्षितं यत

शिरः इतस्ततः चालयन् सः पिशाचः यदा मन्दं पदं स्थापयति स्म तदा गृहाणि, गृहे स्थिताः जनाः, वृक्षाः इत्यादयः सर्वे भूमिसमत्वं प्राप्तवन्तः इति। किन्तु एतत्सन्दर्भे सैनिकैः कोऽपि शब्दः एव न श्रुतः इति तु आश्चर्यकरः विषयः। एवं सर्वं नाशयन् सः पिशाचः उत्तरदिशि गतः इति श्रूयते। अस्माकं केचन सैनिकाः तस्य पिशाचस्य पृष्ठभागं द्रष्टुं शक्तवन्तः, न तु मुखभागम्। पिशाचं तत्कृत्यं च दृष्ट्वा भीताः सैनिकाः धावनपूर्वकम् आगत्य मां सर्वं निवेदितवन्तः" इति उक्तवान् दलनायकः।

"कोऽयं विचित्रः पिशाचः एषः? किमर्थं सः उत्तरदिशि गतः? तत्र कीदृशीं हानिं जनितवान् स्यात् सः? अस्माकं सैनिकाः तं पिशाचं किमर्थं न सम्मुखीकृतवन्तः?" इति युगपत् एव बहून् प्रश्नान् पृष्टवान् सेनाधिपतिः।

"यदि अस्माकं सैनिकाः तं सम्मुखीकर्तुं प्रयत्नं कुर्युः तर्हि ते अपि भूमौ निलीनाः अभविष्यन्। असाध्ये कार्ये प्रयत्नः अनुचितः खलु? अतः ते पिशाचप्रतिरोधार्थं प्रयत्नं न कृतवन्तः" इति उक्तवान् दलनायकः वीरसिंहः।

सेनाधिपतिः क्षणकालस्य चिन्तनस्य अनन्तरम् उक्तवान्– "स च पिशाचः उत्तरदिशि गतः इति खलु भवता उक्तम? तर्हि उत्तरदिशि अपि तेन काऽपि हानिः कृता स्यात् एव। अतः तत्र अस्माभिः परिशीलनं करणीयम्। तस्यां दिशि अविलम्बेन कांश्चन सैनिकान् प्रेषयतु। दक्षिणसमुद्रतीरे यथापूर्वं रक्षणाव्यवस्था अनुवर्तताम्। रात्रौ त्रिषु गणेषु विभक्ताः सैनिकाः जागरूकतया रक्षणं कुर्वन्तु। विचित्रपिशाचविषये अन्या काऽपि वार्ता ज्ञाता चेत् माम् अविलम्बेन निवेदयतु। अहं सर्वं महाराजं निवेद्य तस्य मार्गदर्शनं प्राप्स्यामि। प्रजानां रक्षणरूपं महत् उत्तरदायित्वं निर्वोढव्यम् अस्माभिः सर्वैः अपि" इति।

–(अनुवर्तते)






# योग्यः स्नेहितः

न निश्चितार्थात् विरमन्ति धीराः इत्येतत् धीरलक्षणं स्मरन् स्वस्य धीरत्वं रक्षन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! कस्य वचने विश्वस्य भवान् मध्यरात्रे एतादृशे घोरे श्मशानमार्गे कार्यप्रवृत्तः अस्ति? लोके बहवः अपात्रे विश्वस्य व्यवहरन्तः बहूनि कष्टानि सम्मुखीकुर्वन्ति। भवान् तादृशः न स्यात् खलु? पूर्वं रामनाथः नाम कश्चित् तादृशः आसीत्। दौर्भाग्यं नाम यत्र विश्वासः कृतः सः अपात्रम् इति तेन अन्ते अपि न ज्ञातम् एव। तस्य कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं रामनाथः नाम कश्चित् वणिक् आसीत्। तस्य पत्नी सीता। रामनाथः

## वेतालकथा



सुमधुरं गायति, सुन्दराणि चित्राणि लिखति च। अतः तस्य आत्मीयाः बहवः। रामनाथस्य दाक्षिण्यस्वभावः अपि। ये परिचिताः भवन्ति ते आपणम् आगत्य वस्तूनि यद्यपि क्रीणन्ति, किन्तु धनं तु सर्वे न यच्छन्ति। अतः रामनाथः वाणिज्यतः लाभं न प्राप्नोति स्म।

एतत् दृष्ट्वा खिन्ना सीता कदाचित् पतिम् उक्तवती– "नगरे भवतः परिचिताः विरलाः। अतः तत्र वाणिज्यं विना विघ्नं प्रचलेत्, लाभकरम् अपि भवेत्। अन्यच्च भवति या कला अस्ति तस्याः अपि नगरे आदरः भवेत्। अतः एतं ग्रामं परित्यज्य नगरं गच्छाम तावत्" इति। पुनः पुनः एतादृशानि वचनानि उक्त्वा पतिम् अङ्गीकारितवती सीता। रामनाथः ग्रामस्थं सर्वं विक्रीतवान्। ततः गृहवस्तूनि शकटे आरोप्य सपत्नीकः नगरं प्रति प्रस्थितवान् च।

मार्गे गमनसमये कुत्रचित् शकटस्य कश्चन भागः भग्नः। झटिति एतत् जानन् शाकटिकः शकटात् अवतीर्य शकटं स्थगयित्वा रामनाथं तत्पत्नीं च अवतारितवान्। दैववशात् सर्वे अपायात् रक्षिताः अभवन्।

इदानीं किं करणीयम् इति ते यावत् चिन्तयन्तः आसन् तावता अभिमुखं किञ्चन शकटम् आगतम्। शाकटिकः तत् शकटं स्थगयित्वा साहाय्यं प्रार्थितवान्।

तदा शकटे उपविष्टः कश्चन श्मश्रुलः शकटात् अवतीर्य– "कः भवान्? भवतः साहाय्यार्थं यदि अहं तिष्ठेयं तर्हि मम विलम्बः न भवेत् वा? यदि भवतः परिचयः स्यात् तर्हि साहाय्यं कुर्याम्। अन्यथा ...." इति वदन् रामनाथस्य समीपम् आगतवान्। रामनाथः तं निर्निमेषं दृष्टवान्। सः श्मश्रुलः अपि रामनाथं तथैव दृष्टवान्। क्षणाभ्यन्तरे एव उभाभ्याम् अपि परस्परपरिचयः प्राप्तः। स च श्मश्रुलः रामनाथस्य बाल्यमित्रम् एव। तस्य नाम सत्यानन्दः इति। सः इदानीं नगरे वसति स्म।

सत्यानन्दः रामनाथस्य दर्शनात् नितरां सन्तुष्टः। तौ परस्परम् आलिङ्गनं

कृतवन्तौ। ततः शकटस्य समीकरणे साहाय्यं कृतवान् सत्यानन्दः। एतदभ्यन्तरे रामनाथस्य कथां समग्रां श्रुतवान् सः। अन्ते सः– "मित्र! अहं कार्यविशेषस्य निमित्तं सुदूरं गच्छन् अस्मि। मम प्रत्यागमनं मासद्वयानन्तरं भवेत्। किन्तु तावत् भवद्भ्यां वासार्थम् अन्यत्र न गन्तव्यम्। प्रत्यागत्य अहं भवतोः निमित्तं सर्वाः व्यवस्थाः करिष्यामि" इति उक्त्वा गृहसङ्केतं सूचयित्वा ततः निर्गतवान्।

तस्य गमनस्य अनन्तरं सीता सन्तोषेण पृष्टवती– "नगरे भवतः एतादृशम् आत्मीयं मित्रम् अस्ति इति पूर्वं भवान् मां न उक्तवान् एव खलु?" इति।

तदा रामनाथः उक्तवान्– "प्रौढशाला-विद्याभ्यासपर्यन्तम् अहं सत्यानन्दः धनशेखरः चेति त्रयः परमात्मीयाः आस्म। अहं चित्राणि लिखामि स्म। तानि ताभ्यां विशेषतः रोचते स्म। मद्द्वारा तौ विविधानि चित्राणि लेखयतः स्म। मम सङ्गीतम् अपि ताभ्यां रोचते स्म। कृषिसमये मम कण्ठात् निर्गच्छत् मधुरं गीतं तु तौ मोहयति स्म। अनन्तरकाले तयोः मातापितरौ तं ग्रामं परित्यज्य अन्यत्र गतौ इत्यतः वयं वियुक्ताः अभवाम। ततः अद्यैव अहं सत्यानन्दं पश्यन् अस्मि" इति।

"एवं तर्हि भवतः अपरं मित्रं धनशेखरः अपि नगरे स्यात्" इति उक्तवती सीता।



"आम्। किन्तु धनशेखरविषये सत्यानन्दस्य सदभिप्रायः तु नास्ति। यदा अहं धनशेखरविषये पृष्टवान् तदा सत्यानन्दः उक्तवान् यत् धनशेखरः इदानीं नितरां परिवृत्तः अस्ति। अतः तद्विषये माम् अधिकं मा पृच्छतु इति। अतः धनशेखरस्य दर्शनात् किमपि प्रयोजनं न भवेत् इति भाति" इति पत्नीम् उक्तवान् रामनाथः।

ततः दिनद्वयं यावत् प्रयाणं कृतम्। तृतीये दिने शकटं नगरं प्राप्नोत्। शकटं लघुमार्गेण गच्छत् आसीत्। किञ्चिदग्रे किञ्चन शकटं मार्गमध्ये स्थितम् आसीत्। यावत् तत् ततः न अपगच्छति तावत् एतेन यानेन अग्रे गन्तुं न शक्यते स्म। अतः 'शकटं किञ्चित् पार्श्वे



स्थगयतु इति तं शाकटिकम् उक्त्वा आगच्छतु' इति आदिश्य स्वशकटस्य चालकं प्रेषितवान् रामनाथः।

सः शकटचालकः पुरतः स्थितस्य शकटस्य चालकं यदा विषयम् उक्तवान् तदा सः शकटचालकः कोपेन उक्तवान्– ''एतत् धनशेखरस्य शकटम्। 'एतत् शकटम् अपसारयतु' इति कोऽपि वक्तुं न अर्हति। यदि भवतः त्वरा स्यात् तर्हि पार्श्वस्थेन अन्येन मार्गेण गच्छतु'' इति।

एषः शकटचालकः प्रत्यागत्य रामनाथं प्रवृत्तं सर्वं निवेदितवान्। एवं तर्हि सः धनशेखरः कः स्यात् इति चिन्तयन् तं द्रष्टुं गतवान् रामनाथः। सः धनशेखरः न अन्यः, अपि तु बाल्यस्नेहितः एव। तौ परस्परं परिचयं प्राप्य सन्तोषेण आलिङ्गितवन्तौ। वार्तालापमध्ये यदा सत्यानन्दस्य प्रस्तावः आगतः तदा धनशेखरः उक्तवान्– ''सः सत्यानन्दः नगरे एव वसति। प्रसिद्धिः अपि सम्पादिता तेन। किन्तु धनं तु सम्पादयितुं न शक्तवान् सः। अतः माम् असूयया पश्यति सः'' इति।

धनशेखरः कार्यनिमित्तं दूरप्रदेशं प्रति गच्छन् आसीत्। किन्तु बाल्यस्नेहितः मिलितः इत्यतः सः स्वगमनं व्याक्षेप्तुम् इच्छन् स्वशाकटस्य चालकम् उक्तवान्– ''भोः, मम गमनं व्याक्षिप्तम् इति अहं मित्रं बलभद्रम् उक्त्वा आगमिष्यामि। भवान् एतान् गृहं प्रापयतु'' इति।

धनशेखरस्य शकटं परिवृत्य प्रस्थितम्। रामनाथस्य शकटं तत् शकटम् अन्वसरत्।

किञ्चिद्दूरं यदा गतं तदा रामनाथः स्वपत्नीम् उक्तवान्– ''सत्यानन्दः खलु प्रथमम् अस्मान् स्वगृहम् आहूतवान्? अतः आवां प्रथमं सत्यानन्दस्य गृहम् एव गच्छाव'' इति।

तदा सीता– ''अलम् एतादृशेन कथनेन। मार्गे गच्छन् सत्यानन्दः अस्मान् दृष्टवान्। प्रयाणम् अनुवर्तयन् सः औपचारिकतया अस्मान् आहूतवान्, तावदेव। तस्य अनुपस्थितौ तदीयं गृहं प्रति आवयोः गमनम् अनुचितं भवेत्। धनशेखरः तु स्वकार्यं

स्थगयित्वा अस्मन्निमित्तं गृहं प्रत्यागच्छन् अस्ति। सामान्ये अपि भवति महाधनिकः सः विशेषतः स्निह्यति इति तु महते सन्तोषाय। अतः धनशेखरस्य गृहम् एव गच्छाव" इति निर्णयस्वरेण उक्तवती।

रामनाथः प्रत्युत्तरं किमपि अवदन् मौनं स्थितवान्। धनशेखरस्य शकटस्य चालकः नरसिंहः गृहं प्रदर्श्य– "गृहप्रदर्शनमात्रं मम स्वामिना आदिष्टम्। यावत् आदिष्टं तावदेव करणीयं, न तु ततोऽप्यधिकम् इति स्वामिनः आज्ञा अस्ति। अतः अहं गच्छामि तावत्। भवन्तौ अन्तः गच्छताम्" इति उक्त्वा ततः निर्गतवान्।

नरसिंहस्य व्यवहारं दृष्ट्वा आश्चर्यम् अनुभवन् रामनाथः पत्न्या सह प्रासादसदृशस्य भवनस्य द्वारस्य समीपं गतवान्। द्वारे स्थितः सेवकः तयोः नाम-स्थानादिकं पृष्ट्वा अन्तः गतवान्।

किञ्चित्कालानन्तरं अन्तर्भागतः आगता धनशेखरस्य पत्नी कामाक्षी एतौ दृष्ट्वा– "श्रीमन्! भवन्तौ कौ इति अहं न जानामि। नगरे मम आर्यपुत्रस्य प्रसिद्धिः अधिका। अतः बहवः आत्मानं मम आर्यपुत्रस्य मित्रं वदन्तः अत्र आगच्छन्तः भवन्ति। तेषु केचन चौर्यादिकम् अपि कृतवन्तः। अतः यावत् मम आर्यपुत्रः न प्रत्यागच्छति तावत् भवन्तौ बहिः एव तिष्ठताम्। अन्यथा न चिन्तनीयं भवद्भ्याम्" इति उक्तवती।



एतेन अवमानेन नितरां लज्जितः अभवत् रामनाथः। तथापि सः कोपं निगृह्णन् शान्तस्वरेण एव कामाक्षीम् उक्तवान्– "आर्ये, धनशेखरः मार्गे मिलितः आसीत्। मम गृहं प्रति एव गन्तव्यम् इति सः साग्रहम् उक्तवान् इत्यतः आवाम् अत्र आगतवन्तौ। अन्यथा आवां मित्रस्य सत्यानन्दस्य गृहं गतवन्तौ स्याव" इति।

एतत् वचनं श्रुत्वा कामाक्षी– "सत्यानन्दस्य मित्राणि मम आर्यपुत्रस्यापि मित्राणि भवितुं सर्वथा न अर्हन्ति। यतः तयोः परस्परं महान् विरोधः। सत्यानन्दस्य गृहस्य उपरि उपविष्टः काकः अपि अस्मद्गृहस्य उपरि न उपविशेत्। एवं स्थिते सत्यानन्दस्य



स्नेहितः भवान् मम आर्यपुत्रस्य स्नेहितः न भवेत् एव। भवतः मिथ्यावादिता सुस्पष्टा जाता। अलं वार्तालापेन। भवन्तौ इतः गन्तुम् अर्हतः'' इति निर्दाक्षिण्यम् उक्तवती।

तत्र इतोऽपि क्षणकालम् अपि स्थातुम् अनिच्छन् रामनाथः पत्न्या सह ततः प्रस्थितवान्। 'अत्र यत् अपमाननं जातं तत्र भवती एव कारणम्' इति पत्नीम् उक्त्वा ''इदानीं सत्यानन्दस्य गृहम् एव गच्छाव तावत्'' इति उक्तवान् रामनाथः।

तदा सीता कोपेन– ''अलं नगरे निवसतां मित्राणां सहवासेन। यः नगरे तिष्ठति तत्र एव ईदृशं स्वागतं चेत् नगरान्तरं गतस्य गृहे का वा स्थितिः स्यात्? अलम् अविवेकेन। कामपि भोजनशालां गच्छाव तावत्'' इति उक्तवती। ततः तौ काञ्चित् भोजनशालां गतवन्तौ। भोजनशालायाः स्वामिनी वृद्धा एतयोः नाम-ग्रामादिकं ज्ञात्वा– ''भवन्तौ सत्यनन्दवर्यस्य ग्रामात् आगतौ वा? एवं तर्हि भवन्तौ अत्र स्थातुं न अर्हतः'' इति उक्तवती।

तदा रामनाथः कोपेन– ''सत्यानन्दस्य जन्मस्थलात् यः आगच्छति तस्य वासार्थम् एतस्मिन् नगरे भोजनशालायाम् अपि अवकाशः नास्ति वा?'' इति पृष्टवान्।

एतत् श्रुत्वा सा वृद्धा– ''वत्स! मम वचनस्य आशयः अन्यथा गृहीतः भवता। सत्यानन्दवर्यः परमसज्जनः। यदा अहं कष्टे पतिता आसं तदा सत्यानन्दवर्यः यदि मम साहाय्यं न कृतवान् स्यात् तर्हि न जाने, मम का गतिः अभविष्यत् इति। 'मम ग्रामात् यः आगच्छति सः भोजनशालायां न वसेत्, अपि तु मम गृहे वसेत्' इति सदा वदन् भवति सः। अतः भवतोः, वसत्यर्थं यदि अहम् अत्र व्यवस्थां कुर्यां तर्हि अहम् अपराधिनी स्याम्'' इति उक्त्वा रामनाथेन निषिध्यमाना अपि सा सत्यानन्दगृहं प्रति एकं सेवकं प्रेषितवती।

अल्पे एव काले सत्यानन्दस्य पत्नी निर्मला तत्र आगत्य– ''रामनाथार्य! अत्र किमर्थं वासः चिन्तितः भवता? आत्मीयेषु अस्मासु सत्सु भवतोः वासः अन्यत्र कथं वा भवेत्, ऋते अस्मद्गृहात्? भवतः विषयं मम पतिः

सदा वदन् भवति। तत्रापि भवतः सङ्गीतप्रतिभां सदा प्रशंसन् भवति सः। बाल्ये भवता चित्रितानि सर्वाणि चित्राणि अमूल्यम् ऐश्वर्यम् इव रक्षितानि सन्ति तेन। बाल्ये मम आर्यपुत्रेण कदाचित् कोपेन यत् ताडितं ततः भवतः कपोले व्रणः जातः आसीत् इत्येतां घटनां सः सदा स्मरति। तां घटनां स्मरन् अद्यापि खेदम् अनुभवति सः। अहो, धिक् मम अविवेकिताम्। वार्तालापमग्ना अहं प्रकृतम् एव विस्मृतवती। गच्छाम तावत् अस्माकं गृहम्'' इति उक्तवती।

अनन्योपायौ रामनाथः सीता च सत्यानन्दस्य गृहं गतवन्तौ। किञ्चित्कालानन्तरं धनशेखरस्य शकटस्य चालकः नरसिंहः आगत्य निवेदितवान् यत् धनशेखरवर्यः भवन्तं गृहं प्रति आहूतवान् अस्ति इति। रामनाथः नरसिंहेन सह धनशेखरस्य गृहं गतवान्।

धनशेखरः प्रवृत्तायाः घटनायाः विषये विषादं प्रकटय्य– ''रामनाथ! मम सत्यानन्दस्य च व्याघ्रहरिणयोः इव वैरम्। अतः अहं भवन्तं, स्वयम् आगत्य आह्वातुं न शक्तवान्। गृहं प्रत्यागतः अहं प्रवृत्तं समग्रं ज्ञातवान्। तेन अहं नितरां खिन्नः अस्मि। मम पत्नी अविचिन्त्य यत् उक्तवती तदर्थम् अहं क्षमां प्रार्थये। भवद्भ्यां मम गृहे एव वासः करणीयः। अचिरात् एव भवान् अपि धनिकः यथा भवेत् तथा अहं करिष्यामि'' इति



उक्तवान्।

''भवान् मयि स्नेहं प्रकटयन् अस्ति यत् तदर्थम् अहं कृतज्ञः अस्मि। किन्तु अहं सत्यानन्दगृहे एव वासं करिष्यामि'' इति उक्तवान् रामनाथः।

धनशेखरः बहुधा प्रार्थितवान् यत् भवता मम गृहे एव वासः करणीयः इति। तथापि रामनाथः निराकरणं यदा प्रदर्शितवान् तदा धनशेखरः उक्तवान्– ''भवान् एतदनन्तरम् अपि यदि सत्यानन्दस्य स्नेहम् एव इच्छेत् तर्हि अहं प्रतीकारं साधयेयम्'' इति। तथापि रामनाथः धनशेखरस्य गृहे वासं निराकृत्य सत्यानन्दस्य गृहम् एव गतवान्।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! धनशेखरः बुद्ध्या रामनाथस्य अपमाननं न कृतवान् इति तु सुस्पष्टं खलु? महाधनिकः सः रामनाथं क्षमां प्रार्थितवान् यत् तदेव तस्य औदार्यं द्योतयति। यदि रामनाथः धनशेखरस्य गृहे वासम् अकरिष्यत् तर्हि सः लक्षशः रूप्यकाणां सङ्ग्रहम् अवश्यम् अकरिष्यत्। एवं स्थिते अपि रामनाथः योग्यस्य मित्रस्य अभिज्ञाने असमर्थः सन् उन्नत्यवकाशतः वञ्चितः अभवत्। एतेन सिद्ध्यति खलु– रामनाथः मूर्खः इति? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "नगरे उभौ स्नेहितौ स्तः इति प्रस्थानसमये रामनाथः न जानाति स्म। एतेन सिद्धं यत् सः स्वशक्तौ विश्वस्य नगरं प्रति प्रस्थितः इति। धनशेखरः रामनाथे स्निह्यति स्म इति न सत्यम् एव। किन्तु स च स्नेहभावः रामनाथस्य दर्शनानन्तरं स्मृतः। बाल्यस्नेहितस्य विषये सः पत्नीं किमपि न उक्तवान् आसीत् एव। किन्तु सत्यानन्दः न एतादृशः। रामनाथसम्बद्धान् बहून् विषयान् सः पत्नीम् उक्तवान् आसीत्। तावदेव न, भोजनशालां चालयन्तीं वृद्धाम् अपि स्वग्रामविषये बहु उक्तवान् आसीत् सः। सत्यानन्दः लोकप्रीतिं सम्पाद्य सन्मार्गेण जीवन् जनादरं प्राप्तवान् आसीत्। एतादृशस्य विरोधं सम्पादितवान् अस्ति धनशेखरः। एतत्सर्वं ज्ञात्वा, उभयोः अपि स्वभावं पुनः प्रत्यक्षं दृष्ट्वा च रामनाथः धनशेखरस्य अवलम्बनं परित्यक्तवान्। योग्यः स्नेहितः कः इति विचिन्त्य सः सत्यानन्दस्य गृहे स्थितवान्। तेन काऽपि मूर्खता न आचरिता" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# चन्दमामानुबन्धः—५६

**अस्मद्देशीया पशुपक्षिसम्पत्—**

## शुनक-मार्जारलक्षणोपेतः तरक्षुविशेषः




मार्जारः म्याँव् म्याँव् इति शब्दं करोति। शुनकश्च भषति। एवं तर्हि मार्जार-शुनकयोः लक्षणेन युक्तः पशुः किं वा कुर्यात्? स तु हसति। एषः विचित्रः पशुः यदा ध्वनिम् उत्पादयितुम् इच्छति तदा उच्चैः हसति। एवम् हसन् एषः अस्थिसमूहं परितः अटन् विशिष्टप्रकारेण नृत्यति।

एषः पूर्वोक्तः पशुः तरक्षुजातौ अन्यतमः। एतस्य पादाः शुनकस्य पादाः इव भवन्ति। मुखं च मार्जारस्य इव भवति। किन्तु एतस्मिन् न मार्जारस्य मृदुता सुन्दरता वा, न वा शुनकस्य शरीरदृढता वा। उत्कर्णता, बृहच्छिरयुक्तता च एतस्य वैशिष्ट्यम्। पृष्ठभागस्थौ पादौ किञ्चित् ह्रस्वौ इत्यतः एतस्य शरीरस्य पृष्ठभागः सदा नतः भवति। एतस्य औन्नत्यं ९० सें.मी., दैर्घ्यं च १५० सें.मी. च भवेत्। धूम्रवर्णेन मिश्रवर्णेन च युक्तस्य एतस्य शरीरे तत्र तत्र कृष्णपट्टिकाः भवन्ति। पादेषु तु सर्वत्र कृष्णपट्टिकाः भवन्ति।

एषः पशुः आहारार्थं कमपि जीविनं कदापि स्वयं न मारयति। अन्ये पशवः आहारार्थं जीविनं मारयित्वा खादित्वा यत् अवशेषयन्ति तत् एव खादति एषः। एषः स्वभावेन भीरुः। प्रायः मानवेभ्यः दूरे तिष्ठति। जातमात्रशिशून् अल्पशिशून् वा कदाचित् एषः अपहृत्य नयति इति कुत्रचित् श्रूयते।





आस्सांप्रदेशस्य अरण्येषु भूगर्भतः यत् इन्धनतैलं संशोधितम्, तस्मिन् पर्वतप्रदेशे ''दिग्बाय्'' नामकं नगरं निर्मितम्। भारतदेशस्य विविधप्रदेशेभ्यः कर्मकराः तत् नगरं गतवन्तः। यद्यपि ते सर्वेऽपि भिन्नभिन्नमतीयाः, तथापि एकमनसा कार्यं कुर्वन्ति स्म।

तस्मिन् एव स्थाने दिनकरेश्वरः नाम कश्चन अधिकारी आसीत्। सः हिन्दुः। यवनयुवत्यां

# वीरेन्द्रकुमारभट्टाचार्यस्य कृतिः – 'प्रतिपाद्'

जहानारायाम् अनुरक्तः दिनकरेश्वरः ताम् परिणेतुम् इष्टवान्। अतः सः इस्लांमतम् अङ्गीकृत्य 'गियासुद्दीन्' इति नाम प्राप्य जहनाराम् परिणीतवान्। केषुचित् दिनेषु एव जहनारा केनचित् महाव्याधिना ग्रस्ता अभवत्। पतिः उत्तमः धुरीणः, तादृशात् दूरं गच्छामि इति सा मनसि एव दुःखम् अनुभूतवती। 'पन्ना'नामिका काचित् बालिका जहनारायाः शुश्रूषां करोति स्म। 'मम मरणानन्तरं मम पतिं वृणोतु' इति पन्नाम् उक्त्वा केषुचित् दिनेषु एव जहनारा दिवङ्गता।

यदि गियासुद्दीन् पुनः हिन्दुधर्मीयः भवति, तर्हि एव मम पुत्रीं परिणेतुं शक्नोति इति 'पन्ना'बालिकायाः पिता आग्रहं कृतवान्। तेषु एव दिनेषु चटर्जिनामकः युवकः पन्नायाम् अनुरक्तः आसीत्। किन्तु सङ्कोचकारणतः स्वाभिलाषां न प्रकटितवान् सः।

तस्मिन् नगरे कर्मकराः एकमनसा कार्यं कुर्वन्ति। एतत् सोढुम् अशक्ताः ब्रिटिश्तैलकेन्द्रस्य स्वामिनः आधुनिकानि यन्त्राणि आनायितवन्तः। बहुजनान् विना कारणम् उद्योगात् निष्कासितवन्तः। एतेन अशान्तिकारणेन कर्मकराः घर्षणम् कोलाहलादीन् च आरब्धवन्तः। कर्मकराणां प्रतिक्रियां दृष्ट्वा तैलकेन्द्रस्वामिनां भीतिः उत्पन्ना। अतः ते हिन्दू-यवनयोः मध्ये द्वेषभावनाः वर्धयितुं प्रयत्नं कृतवन्तः। हिन्दुदेवालयेषु गोमांसं स्थापयितुम् आरब्धवन्तः। किन्तु यः गोमांसं स्थापितवान्, तं गृहीतवन्तः इति कारणतः रहस्यं सर्वैः ज्ञातम् अभवत्। एतत् सर्वं द्वितीयमहायुद्धात् पूर्वम् एव प्राचलत्। तस्मिन् कालखण्डे आंग्लेयाः उद्देशपूर्वकं भारतीयेभ्यः दूरे तिष्ठन्ति स्म। आंग्लेयानां भारतीयानां च मध्ये कोऽपि सम्बन्धः एव न आसीत्।

कर्मकराणां कार्यस्थगनस्य कारणतः यन्त्रागाराणां स्वामिनः नूतनान् कर्मकरान् अन्यप्रदेशतः




आनेतुम् उद्युक्ताः अभवन्। किन्तु तत्रत्याः पुरातनाः कर्मकराः नूतनानां नियोजने विघ्नं कृतवन्तः।

एतेन कुपितः कश्चित् आङ्ग्लेयः अधिकारी गोलकास्त्रं प्रयुक्तवान्। गोलकास्त्रेण 'पन्ना'बालिकायाः पिता चान्दि अभीर्, चटर्जि, नूतनतया विवाहितः गायकः बरूवा, देवालयेषु यः गोमांसं स्थापयित्वा अनन्तरं पश्चातापम् अनुभूय पुनः कर्मकराणां गणं प्रविष्टः सः बोधन्-इति एते चत्वारः प्रमुखाः मृताः।

आङ्ग्लयेषु अपि केचन नीतिमन्तः दयालवः आसन्। तेषु श्रीमती फेम्लियास् अपि अन्यतमा। सा कष्टे ये कर्मकराः सन्ति तेषां आधाररूपेण स्थित्वा साहाय्यं कृतवती।

'कथा एतावता एव न समाप्ता। असहायानां मारणार्थम् इतोऽपि गोलकास्त्राणि आगमिष्यन्ति' इत्येतं सन्देशं प्रसारयन् एषः कथाग्रन्थः समाप्तिं गच्छति।

प्रख्यातः आस्साम्लेखकः, ज्ञानपीठप्रशस्तिविजेता बीरेन्द्रकुमारभट्टाचार्यः 'प्रतिपाद्' इति एकं कथापुस्तकं लिखितवान्।तस्य कथाग्रन्थस्य सङ्क्षिप्ता कथा एषा। १९३९ वर्षे सामान्यतः दशसहस्रं जनाः 'दिग्बाय' कर्मकरसंग्रामे भागं गृहीतवन्तः। तस्य आधारेण एषः कथाग्रन्थः रचितः। एतस्मिन् पात्राणि सन्निवेशादयः च सहजतया चित्रिताः सन्ति। 'नेशनल् बुक् ट्रस्ट् आफ् इण्डिया' संस्थया विविधभाषाभिः एतस्य कथाग्रन्थस्य अनुवादः कृतः अस्ति।

# भवन्तः जानन्ति वा?

१. मैसूरुनगरस्य टिप्पुमहाराजस्य राजधानी का आसीत्?
२. गरुडस्य सर्पस्य च चिह्नं कस्य देशस्य ध्वजे अस्ति?
३. इङ्ग्लेण्ड्देशे तमाखोः प्रवेशः केन कारितः?
४. १९३९ वर्षस्य सप्टम्बर्मासे ३ दिनाङ्के प्रवृत्ता प्रमुखा घटना का?
५. रवीन्द्रनाथठाकूरः किं निमित्तं नोबल्पारितोषिकं प्राप्तवान्?
६. डैनमैट् संशोधकः कः?
७. होल्कर्महोदयः कस्मात् प्रदेशात् शासनं कृतवान्?
८. सः देशः कः, यस्मिन् च यूकलिप्टस्वृक्षाः अधिकाः सन्ति?
९. सिलोन्देशः कदा 'श्रीलङ्का' इति नामकरणं प्राप्तवान्?
१०. 'साबर्मतीसाधुः' इति कः उच्यते स्म?
११. पर्षियाराज्यस्य स्थापकः कः?
१२. सहगमनकुप्रथां बाल्यविवाहक्रमं च विरुध्य कार्यं कृतवान् भारतीयः समाजसेवकः कः?
१३. अन्तरिक्षं गता प्रथमा व्यक्तिः का?
१४. सूर्यमण्डले महान् ग्रहः कः?
१५. कश्चित् सिक्खगुरुः अमृतसरनगरे यत्र वासं कृतवान् तत्रैव सुवर्णदेवालयः निर्मितः। सः गुरुः कः?
१६. द्वादशाङ्गुलदीर्घया जिह्वया युक्तोऽपि ध्वनिम् उत्पादयितुम् असमर्थः जीवी कः?
१७. अल्पे एव वयसि नोबल्शान्तिपारितोषिकं कः प्राप्तवान्?
१८. आर्यसमाजस्य स्थापकः कः?
१९. कोलार-सुवर्णखनी कस्मिन् राज्ये अस्ति?
२०. लोकसभां निषेद्धुं सभापतेः अधिकारः अस्ति वा? नास्ति चेत् सः अधिकारः कस्य अस्ति?

## उत्तराणि

१. श्रीरङ्गपत्तनम्। (कर्णाटके)
२. मेक्सिकोदेशस्य ध्वजे।
३. सर् वाल्टर् र्यालि(१५५२-१६१८)नामकेन आंग्लेयेन।
४. इङ्ग्लेण्ड्देशेन जर्मनीं विरुध्य युद्धं घोषितम्।
५. गीताञ्जलिनामकस्य काव्यस्य निमित्तम्।
६. आलफ्रड् नोबल्। (१८६७)
७. इदानीं मध्यप्रदेशे स्थितात् इन्दोर्नगरात्।
८. आस्ट्रेलिया।
९. मेमासे, १९७२ तमे वर्षे।
१०. महात्मा गान्धी।
११. सैरस्चक्रवर्ती। (क्रि.पू. ५००-४००)
१२. राजाराममोहनरायः।
१३. यूरि गागरिन्। (रशियादेशीयः।)
१४. गुरुः। (१,४२,८०० कि.मी. विस्तृतः)
१५. गुरुः रामदासः।
१६. चित्रोष्ट्रः। (जिराफे)
१७. मार्टिन् लूथर् किंग् जूनियर्। १९६४ तमे वर्षे ३५ तमे वयसि।
१८. स्वामी दयानन्दसरस्वती।
१९. कर्णाटकराज्ये।
२०. नास्ति। राष्ट्रपतेः अस्ति।



# सन्तोषकारणम्

चन्द्रनाथः कश्चन गृहस्थः। संन्यासिषु सज्जनेषु च तस्य विशेषादरः आसीत्। कदाचित् कश्चन संन्यासी चन्द्रनाथस्य गृहम् आगतवान्। चन्द्रनाथः भक्त्या श्रद्धया च तस्य सत्कारं कृतवान्। एतेन संन्यासी नितरां सन्तुष्टः। अतः सः चन्द्रनाथम् उक्तवान्– "भवतः भक्त्या अहं प्रसन्नः अस्मि। यदि भक्तः काऽपि इच्छा स्यात् तर्हि वदतु। वरदानेन अनुग्रहीष्यामि" इति।

तदा चन्द्रनाथः विनयेन एव उक्तवान्– "श्रीमन्! अहं जीवने सन्तृप्तः अस्मि। भवादृशानाम् आशीर्वादस्य कारणतः मम जीवने सम्पत्तेः सुखस्य वा न्यूनता नास्ति। किन्तु मम पत्नी इन्दुमती सदा असन्तोषेण तिष्ठति। यदि तत्रभवान् तस्याः असन्तोषं दूरीकर्तुं कमपि मार्गम् उपदिशेत् तर्हि अहम् अनुगृहीतः स्याम्" इति।

चन्द्रनाथस्य प्रार्थनाम् अङ्गीकुर्वन् संन्यासी सूचितवान् यत् पत्नीम् अत्र आनयतु इति। इन्दुमती तत्र आगतवती। संन्यासी तां बहून् प्रश्नान् पृष्टवान्। इन्दुमती उक्तवती– "पतिप्रेम पूर्णतया प्राप्यते मया। सर्वाः इच्छाः सदा पूरिताः भवन्ति अपि। गृहे सेवक-सेविकाः अपि बहवः सन्ति। यदा समयः भवति तदा अहं पुस्तकानि पठामि, सङ्गीतं शृणोमि वा" इति।

तदा संन्यासी पृष्टवान्– "एवं स्थिते अपि भवत्याः असन्तोषः किमर्थम्?" इति।

"अहम् अपि न जानामि यत् एवं सर्वविधेषु आनुकूल्येषु सत्सु अपि किमर्थं मम असन्तोषः भवति इति। मम गृहस्य पार्श्वे एकः कुटीरः अस्ति। तत्र वीरेशः नाम कश्चित् निवसति। सः तत्पत्नी कान्ता चापि प्रतिदिनं कार्यं कुरुतः। तथापि तयोः कष्टं तु कदापि न अपगच्छति। एवं स्थिते अपि, काऽपि समस्या यस्य न भवति तादृशः इव सा



सन्तोषेण कुटुम्बनिर्वहणं करोति। अहं तु चिन्तयामि यत् पूर्वजन्मनः पुण्यस्य फलतः सा एवं निश्चिन्ता तिष्ठति इति'' इति उक्तवती इन्दुमती।

सन्यासी क्षणकालं विचिन्त्य उक्तवान्– ''प्रतिफलापेक्षां विना कान्ता प्रायः कार्यं करोति। अतः सा सन्तोषेण तृप्त्या च तिष्ठति। भवती अपि प्रतिफलापेक्षां विना कार्यं करोतु। दीनदरिद्रादीनां साहाय्यं करोतु। एतेन भवत्याः असन्तोषः अपगच्छति'' इति।

'संन्यासिनः वचनस्य पालने कष्टम् अस्ति' इति आलोचितवती इन्दुमती। 'संन्यासी यत् वदति तत् युक्तम् अपि स्यात्। अद्यावधि मया अन्येषां साहाय्यं प्राप्तम्, किन्तु कदापि साहाय्यं न कृतम्' इति तस्याः विचारः।

तत्समये लक्ष्मीः इति काचित् तत्र आगतवती। सा निर्धना। कदाचित् इन्दुमत्याः गृहम् अपि आगतवती आसीत् सा। तदा इन्दुमती उक्तवती आसीत् यत् भवती केषाञ्चित् दिनानाम् अनन्तरम् आगच्छतु इति। तदनुगुणम् इदानीम् आगतवती आसीत् लक्ष्मीः।

इन्दुमती अनासक्त्या लक्ष्मीम् उक्तवती– ''मम गृहे ये सेवकाः सन्ति तेभ्यः दातुम् एव कार्याणि अपर्याप्तानि। भवतीम् अपि कार्ये नियोज्य अहं किं वा कुर्याम्?'' इति।

लक्ष्मीः निराशया ततः प्रतिगन्तुम् उद्युक्ता। तदा संन्यासी ताम् उक्तवान्– ''भवती वीरेशगृहे कार्यं करोति खलु? वस्तुतः वीरेशस्य गृहे महत् दारिद्र्यम् इति श्रूयते। एवं स्थिते अपि तत्र कर्मकरीत्वेन नियुक्ता इति तु आश्चर्यकरम्'' इति।

तदा लक्ष्मीः संन्यासिनम् उक्तवती– ''प्रतिफलदानं विना अहं कस्यापि साहाय्यं स्वीकर्तुं न इच्छामि। एतं ग्रामम् ऐदम्प्राथम्येन आगतायाः मम प्रथमं कश्चन आश्रयः आवश्यकः इति जानन्तः वीरेशगृहीयाः मां कर्मकरीत्वेन नियोजितवन्तः। अहं तेषां सर्वेषु कार्येषु यथाशक्ति साहाय्यं कुर्वती अस्मि। स्वयं यत् ते खादन्ति तदेव मह्यम् अपि यच्छन्ति। अहं यत् कार्यं करोमि तदर्थं त्रीणि रूप्यकाणि



दीयन्ते चेत् पर्याप्तम् इति अहम् उक्तवती आसम्। किन्तु ते प्रतिमासं पञ्च रूप्यकाणि दत्तवन्तः। सद्यः मम वासः अपि तस्मिन् गृहे एव। अद्यावधि अन्यत्र कुत्रापि कार्यं न प्राप्तम्'' इति।

तदा तत्रैव स्थिता इन्दुमती उक्तवती– ''भवत्याः एतावत् कष्टम् आसीत् इति अहं न जानामि स्म। अहं भवत्यै प्रतिदिनं भोजनद्वयं, प्रतिमासं दश रूप्यकाणि च दास्यामि। भवती मम गृहे कार्यं करोतु'' इति।

''अस्तु। किन्तु कान्तायाः गृहस्य कार्यं परित्यजतु इति न वक्तव्यम्। यतः मम साहाय्यं तत्र अत्यावश्यकम् अस्ति'' इति उक्तवती लक्ष्मीः।

'यदि अहम् एतत् निराकुर्यां तर्हि संन्यासी चिन्तयेत् यत् कान्तायाः सुखम् असहमाना अहं स्वार्थिनी इति' इति आलोच्य सा लक्ष्म्याः वचनम् अङ्गीकृतवती।

इन्दुमत्याः एतेन व्यवहारेण संन्यासी सन्तुष्टः। ''अहम् अचिरात् एव पुनः आगमिष्यामि। तावता भवत्याः असन्तोषः समूलं नष्टः भवेत् इति अहं भावयामि'' इति उक्त्वा सः ततः निर्गतवान्।

लक्ष्म्यै दातुम् इन्दुमत्याः गृहे वस्तुतः अपि अधिकानि कार्याणि न आसन्। किन्तु लक्ष्मीः विना कार्यं तिष्ठति चेत् उचितं न भवेत् खलु? अतः इन्दुमती नूतनानि कार्याणि सृष्ट्वा तानि कर्तुं लक्ष्मीं वदति स्म। किन्तु एतादृशानि कार्याणि लीलया करोति स्म लक्ष्मीः। यदा लक्ष्मीः पुनः कार्यरहिता तिष्ठति तदा इन्दुमत्याः असन्तोषः वर्धते स्म। तदा सा विशेषप्रयोजनरहितानि कार्याणि लक्ष्मीं वदति स्म। तादृशानां कार्याणां करणेन न विशेषलाभः, अकरणेन वा न कोऽपि विशेषहानिः। तानि कार्याणि यथा– 'गृहस्य पृष्ठतः काकः उच्चैः रटति। तं ततः निवारयतु' 'मार्गे एतावान् कोलाहलः किमर्थम् इति दृष्ट्वा आगच्छतु' इत्यादीनि।

एतादृशानि कार्याणि विनायासं करोति लक्ष्मीः। यद्यपि एतादृशानां कार्याणां करणे महान् श्रमः कोऽपि नास्ति, तथापि कान्तायाः गृहस्य कार्याणां करणे यावान् सन्तोषः तावान्

सन्तोषः इन्दुमत्याः गृहे न भवति स्म। अन्यच्च कान्तायाः गृहस्य विषये लक्ष्मीः किमपि असन्तोषसूचकं पदं न वदति, प्रत्युत प्रशंसाम् एव करोति। एतत् पश्यन्त्याः इन्दुमत्याः असन्तोषः वर्धते।

केषाञ्चित् दिनानाम् अनन्तरं संन्यासी पुनः आगतः। सर्वं विषयं ज्ञातवान् सः। ततः कान्तायाः गृहं गत्वा वस्तुस्थितिं परिशीलितवान् अपि।

गम्भीरमुखं संन्यासिनं दृष्ट्वा इन्दुमती पृष्टवती– "श्रीमन्! आवयोः मध्ये कोऽपि भेदः लक्षितः वा तत्रभवता?" इति।

तदा संन्यासी उक्तवान्– "कान्तायाः गृहे सदा कार्याणि अधिकानि भवन्ति। तथापि ते आवश्यकतायां सत्याम् एव लक्ष्मीद्वारा कार्यं कारयन्ति। येन पात्रेण ते आहारं स्वीकुर्वन्ति तत् पात्रं ते स्वयं क्षालयन्ति, न तु कर्मकरीं तत्कार्ये नियोजयन्ति। यद्यपि लक्ष्म्यै तैः वेतनं दीयते, तथापि लक्ष्मीः तत्र कर्मकरीभावनां न प्राप्नोति" इति।

एतत् श्रुत्वा कोपमिश्रितेन स्वरेण उक्तवती इन्दुमती– "लक्ष्म्याः विषये मया अपि अनुचितं न आचरितम्" इति।

"कार्याधिक्यम् अस्ति इत्यतः कान्ता लक्ष्मीद्वारा कार्याणि कारयति। भवती तु 'गृहे कर्मकरी अस्ति, अतः मया कार्यं कारणीयम्' इति चिन्तयित्वा कार्याणि कारयति। व्यवहारद्वये किं भेदः न लक्ष्यते भवत्या?" इति पृष्टवान् संन्यासी।

इदानीम् इन्दुमती स्वदोषं ज्ञातवती। यावत् सा किमपि वक्तुम् उद्युक्ता तावता संन्यासी पुनः उक्तवान्– "भवत्याः असन्तोषस्य कारणम् ईर्ष्या। कान्तायाः तृप्तिं दृष्ट्वा भवती असूयाम् अनुभवति। प्रथमम् एताम् ईर्ष्यां परित्यज्य कान्तायाः स्नेहं प्राप्नोतु। स्वस्य आढ्यतां विस्मृत्य कष्टग्रस्तानां साहाय्यं करोतु। तेन भवती असीमं सन्तोषं प्राप्स्यति" इति।

इन्दुमती संन्यासिनः उपदेशम् अङ्गीकृतवती। तस्मात् दिनात् आरभ्य तस्याः व्यवहारे महत् परिवर्तनं जातम्। तस्मात् सा सन्तोषं तृप्तिं च प्राप्तवती।



# र स वा र्ता:




## भारतीयः विद्यार्थी अमेरिकादेशेन प्रोत्साहितः

वाशिङ्गटन्समीपस्थे फेर्फ्याक्स् कौण्टी इत्यत्र द्वादशवर्षीयः अखिल रस्तोगी षष्ठकक्ष्यायां विद्याभ्यासं कुर्वन् अस्ति। तस्य माता वित्तकोषे उद्योगिनी। तस्याः अङ्गविकलता आसीत्। अतः सा गलन्तिकातः चषके क्षीरस्य स्थापन समये क्षीरं पार्श्वे पतति स्म। एतत् दृष्ट्वा नितरां खिन्नः अखिलः स्क्रूयुक्तां प्लास्टिक्नलिकां सज्जीकृतवान्, यस्याः च साहाय्येन विना व्यर्थतां क्षीरं चषके स्थापयितुं शक्यते। एतत् साधनं दृष्ट्वा माता नितरां सन्तुष्टा। तदा मित्राणि बान्धवाः च अखिलं बोधितवन्तः यत् एतस्य साधनस्य 'पेटेण्ट्' प्राप्नोतु इति। अमेरिकादेशस्य कयाचित् संस्थया 'पेटेण्ट्' अङ्गीकृतम्। एवम् अत्यल्पे एव वयसि अखिलः अमेरिकादेशीयं 'पेटेण्ट्' प्राप्तवान्।

## आंग्लभाषायां शब्दवर्गक्रीडा

शब्दवर्गक्रीडा आंग्लभाषया 'स्क्रेबल्' इति उच्यते। आंग्लभाषाभ्यासिनः विद्यार्थिनः एतां क्रीडां विशेषेण इच्छन्ति। एषा क्रीडा शब्दसम्पत्तिं वर्धयति। आल्फ्रेड् बट्स्नामकः कश्चन शिल्पी एतां क्रीडाम् आरचितवान्। एषः स्वस्य ९३ तमे वर्षे गते एप्रिल्मासे दिवं गतः। तेन एषा क्रीडा १९३० तमे वर्षे आरचिता आसीत्। ततः सः तत् तन्त्रं बोर्डवणिग्भ्यः विक्रेतुम् इष्टवान्। किन्तु कोऽपि न क्रीतवान्। ततः २० वर्षाणाम् अनन्तरं काचित् लघुवाणिज्यसंस्था एतस्य क्रीडासाधनस्य प्रकाशनम् अकरोत्। बालाः अत्र विशेषासक्तिं प्रदर्शितवन्तः। एतेन प्रभाविता काचित् संस्था, यया पूर्वम् एतस्याः प्रकाशनं निराकृतम् आसीत्, पुनः एतत् क्रीत्वा महता प्रमाणेन विक्रयणव्यवस्थाम् अकरोत्। येन तन्त्रेण एतत् क्रीडासाधनं सज्जीकृतं तत्रैव ततनान् अंशान् योजयित्वा 'मेग्नेटिक् सेट्' अपि सज्जीकृतम्, यस्य च आधारेण प्रयाणसमये अपि क्रीडनं शक्यते। ततः प्रपञ्चस्य बहवीषु भाषासु एतत् साधनं प्रकाशितम्। एवं हि अनुमीयते यत् एतावता कोटिशः एतादृशानि क्रीडासाधनानि विक्रीतानि स्युः इति।





# विदूषकः बहलूलः

खलीफा हारान् अलरषीद्राजस्य आस्थाने बहलूलः नाम कश्चन विदूषकः आसीत्। सः मेधावी विवेकी च आसीत्। कदाचित् महाराजः तं विदूषकम् पृष्टवान्– "अस्माकं बगदादनगरे कति जनाः मूर्खाः सन्ति इति भवान् जानाति वा?" इति।

"आम्, अहं जानामि" इति उक्तवान् विदूषकः।

"तर्हि तेषाम् आवलीं करोतु। एकः अपि परित्यक्तः यथा न भवेत् तथा आवली करणीया भवता" इति उक्तवान् राजा।

तदा हसन् उक्तवान् विदूषकः– "के के मूर्खाः इति ज्ञातव्यं चेत् मूर्खाणाम् आवली करणीया नास्ति। अहम् अत्रत्यानां बुद्धिमताम् आवली करोमि। ते च अत्यल्पाः भवन्ति। यस्य नाम आवल्यां नास्ति सः मूर्खः इति निर्णेतुं शक्यते" इति।

पुनः कदाचित् विदूषकः राज्ञः सिंहासने उपविष्टवान्। विदूषकस्य एतत् दुःस्साहसं दृष्ट्वा क्रुद्धाः राजभटाः तं ताडितवन्तः। विदूषकः उच्चैः आक्रन्दनं कृतवान्। राजा तत्र आगतः। प्रवृत्तं ज्ञात्वा सः विदूषकस्य सान्त्वनं कर्तुम् उद्युक्तः।

"प्रभो, भवता अन्यथा गृहीतम्। अहं ताडितः यत् तदर्थं मम आक्रन्दनं न। अहं क्षणमात्रं सिंहासने उपविष्टवान्। तदर्थम् एव मया एतावन्ति ताडनानि प्राप्तानि। एवं स्थिते बहूनि वर्षाणि यावत् सिंहासने उपविश्य शासनं कृतवता भवता परलोके कियन्ति ताडनानि प्राप्तव्यानि भवेयुः इति चिन्तयतः मम मुखात् आक्रन्दनं निर्गतम्" इति उक्तवान् विदूषकः।

बहलूलः विवाहं न इच्छति स्म। एतत् राजा जानाति स्म। कदाचित् सः स्वसेविकासु

"अरेबिया जानपदकथा"

अन्यतमां सुन्दरीं तरुणीं चित्वा तरुणी-विदूषकयोः विवाहं बलात् निर्वर्तितवान्। रात्रौ वधूः यदा स्वसमीपम् उपवेष्टुम् आगता तदा विदूषकः बहलूलः 'हा हन्त! हम्मो! हा हा!' इति उच्चैः आक्रोशनं कुर्वन् वेगेन धावन् राज्ञः समीपं गत्वा स्थितवान्।

बहलूलस्य आगमनेन कुपितः राजा– "किं रे अविवेकिन्! सुन्दरी तरुणी दत्ता इत्यतः सन्तोष्टव्यं खलु? एवं स्थिते बलिनिमित्तं नीयमानः अजः इव आक्रोशनं कुर्वन् आगतः खलु?" इति उक्तवान्।

तदा विदूषकः उक्तवान्– "प्रभो, क्षन्तव्यः अहम्। मम पत्नी सुन्दरी इत्यत्र सन्देहः एव नास्ति। किन्तु सा यदा मम पार्श्वे आगत्य उपविष्टवती तदा यथा यथा तस्याः हृदयं स्पन्दते स्म तथा तथा मया श्रूयते स्म यत् मह्यम् आभरणम् आवश्यकम्, मह्यं शाटिकाः आवश्यिकाः इति। अतः अहं भीत्या पलाय्य अत्र आगतः" इति। एतत् श्रुतवतः राज्ञः कोपः समूलम् अपगतः।

राज्ञः सकाशात् धनं प्राप्तव्यम् इति उद्देशेन विदूषकः एवं कृतवान् न आसीत्। यतः पूर्वं कदाचित् राज्ञा यदा सहस्रं दीनाराः दत्ताः आसन् तदा विदूषकः तस्य स्वीकारं निराकृतवान् आसीत्। पुनरपि यदा राजा धनं दातुम् उद्युक्तः तदा अपि विदूषकः तत् निराकृतवान् आसीत्।

तदा राजा पृष्टवान्– "अहं सन्तोषेण यदा



धनं ददामि तदा अपि भवान् किमर्थं न स्वीकरोति? धनस्वीकरणेन भवतः का हानिः?" इति।

विदूषकः तु उत्तरं किमपि अवदन् स्वपादम् उन्नीय राज्ञः पुरतः गृहीतवान्। विदूषकस्य अहङ्कारं दृष्ट्वा क्रुद्धाः भटाः तं ताडयितुम् उद्युक्ताः।

"प्रभो, एतत् लक्षणीयं भवता। यदि अहं भवता दीयमानस्य उपायनस्य स्वीकारार्थं हस्तं प्रसारितवान् स्यां तर्हि इदानीम् एवं पादं भवन्मुखस्य पुरतः ग्रहीतुम् अशक्तः अभविष्यम्" इति उक्तवान् विदूषकः।

पुनः कदाचित् राजा युद्धं समाप्य प्रत्यागच्छन् आसीत्। तदा राज्ञा सह विदूषकः बहलूलः अपि आसीत्। एवं प्रत्यागमनसमये मध्येमार्गं कुत्रापि वसतिव्यवस्था उपकल्पिता आसीत्। तत्र राज्ञः पिपासा जाता। सः उपविष्टः एव–"भोः, जलम् .... जलम् ...." इति उच्चस्वरेण आज्ञां कृतवान्। सेवकः जलम् आनीय दत्तवान्।

तदा विदूषकः पृष्टवान्– "श्रीमन्! जलपानात् पूर्वं मम एकस्य प्रश्नस्य उत्तरं वक्तव्यं भवता। यदि एतत् जलं प्राप्तं न स्यात् तर्हि एतस्य प्राप्त्यर्थं भवान् किम् अदास्यत्?" इति।

"अर्धं राज्यम् अपि दद्यां कदाचित्" इति उक्त्वा जलं पीतवान् राजा।

"पुनः एकः प्रश्नः अस्ति मम। पीतं जलं यदि शरीरात् न निर्गच्छेत्, ततः यदि शरीरस्य उच्छूनता भवेत् तर्हि शरीरात् जलस्य निस्सारणार्थं भवान् किम् अदास्यत्?" इति पृष्टवान् विदूषकः।

"आवश्यकतायां सत्यां, तदा अपि अर्धं राज्यं दद्याम्" इति उक्तवान् राजा।

"एवं तर्हि पीतस्य जलस्य, शरीरात् निर्गच्छतः मलिनजलस्य च तुल्यता यस्य अस्ति तादृशस्य राज्यस्य निमित्तं युद्धं, तदर्थं जनहानिः धनहानिः च किं शोभते?" इति पृष्टवान् विदूषकः।

राजा लज्जया शिरः अवनमितवान्।






रामः यदा सीतां कोपेन निन्दितवान् तदा तत्र विद्यमानेषु सर्वेषु अपि भीतिः उत्पन्ना। कदापि एतादृशकटुवचनानि न श्रुतवती आसीत् सीता। सर्वेषां पुरतः अपमाननं जातम् इति कारणतः सीता मौनं रुदितवती।

किञ्चित्कालानन्तरं अश्रुपूर्णा सीता उक्तवती– "हे वीर, किमर्थम् एतादृशानि कटुवचनानि वदति भवान्? ईदृशानि वचनानि तु अज्ञानिनः मुखात् आगच्छेयुः, न तु भवतः मुखात्। मया श्रोतुम् अयोग्यानि एतानि वचनानि। भवतः चिन्तनानुसारम् अत्र मम अपराधः नास्ति। स्त्रीषु कलङ्कः भवति इति कारणतः स्त्रीकुलम् एव कलङ्कितं मा भावयतु। यदि भवान् मम स्वभावं सम्यक् जानाति, तर्हि मद्विषये संशयं दूरीकरोतु। मम अपहरणसमये रावणस्य शरीरस्पर्शः जातः चेत् सः मम अपराधः न। यतः अहं तु असहाया आसम्। रावणस्य वशे अहम् आसम् चेदपि मम मनः भवति एव लग्नम् आसीत्। एतावत्पर्यन्तम् आवां सहजीवनं कृतवन्तौ, तथापि यदि भवान् मम स्वभावं न ज्ञातवान् तर्हि इतः परं कदापि अवगन्तुं न शक्नोति। मया सह जीवनं न इच्छति चेत् मम अन्वेषणार्थं किमर्थं भवान् हनुमन्तं प्रेषितवान्? 'भवत्या सह जीवनं यापयितुं न इच्छामि' इति हनुमतः द्वारा वार्तां यदि प्रेषितवान् स्यात् तत्रैव प्राणान् त्यजेयम्। तदा घोरस्य युद्धस्य आवश्यकता एव न

३७. सीतायाः अग्निप्रवेशः।



अभविष्यत्। महता प्रयत्नेन सेतुं निर्माय लङ्कां वशीकर्तुं भवता प्रयत्नः कृतः। घोरं युद्धं कृतम्। वीराधिवीराः राक्षसाः मारिताः। वानरवीराः बहवः प्राणैः वियुक्ताः अभवन्। अन्ये बहवः खिन्नाः, विकलाङ्गाः, व्यथिताः च स्युः। बह्वीनां मातृणां भगिनीनां च अश्रुधारा एव निःसृता स्यात्। एतत्सर्वं किमर्थं वा कृतं भवता? 'सीते! भवतीम् अहं न इच्छामि' इति एकं वचनं कस्यचित् द्वारा यदि भवता सन्दिष्टं स्यात् तर्हि एतस्य सर्वस्य करणम् एव अनावश्यकम् अभविष्यत्। अस्तु तावत्, यावत् मयि भवतः प्रीतिः तावत् मम जीवनस्य सार्थकता। भवतः प्रीतिः नास्ति चेत् किं मम जीवितेन?" इति।

अनन्तरं सीता लक्ष्मणम् उद्दिश्य उक्तवती– "हे लक्ष्मण, अहम् एतादृशं दुःखं सोढुं न शक्नोमि। चितां सज्जीकरोतु। चितां प्रविश्य प्राणान् त्यजामि। कटुवचनानां श्रवणानन्तरं जीवितुं मम इच्छा नास्ति। यदि पतिः एव मां निराकरोति, तर्हि अग्निप्रवेशं विना अन्या गतिः नास्ति मम" इति।

एतादृशैः वचनैः अतीव दुःखितः लक्ष्मणः रामं दृष्टवान्। रामस्य भावस्तु सीता अग्निप्रवेशं करोतु इत्येव आसीत्। अतः लक्ष्मणः सीतायाः आज्ञानुसारं चितां सज्जीकृतवान्।

चिता सम्यक् ज्वलन्ती आसीत्। सीता अवनतशिरसः रामस्य प्रदिक्षणं कृत्वा चितासमीपं गतवती। चितां प्रदक्षिणपूर्वकं नमस्कृत्य "मम मनः रामं विना अन्यस्मिन् पुरुषे न लग्नम् इत्येतत् यदि सत्यं स्यात् तर्हि अग्निदेवः मां रक्षतु। सूर्यचन्द्रादयः इतरदेवताः च यदि मां पतिव्रतां मन्यन्ते तर्हि अग्निदेवः मां रक्षतु" इत्युक्त्वा चितां प्रविष्टवती।

एतत् दृष्ट्वा तत्र सम्मिलिताः सर्वे अपि हाहाकारं कृतवन्तः। श्रीरामः अश्रूणि मुञ्चन् मौनं स्थितवान्।

तावति काले अग्निदेवः सीताम् उन्नीय चितातः बहिः आगतवान्। सीता तु यथापूर्वम्-अलङ्कृता एव आसीत्। तस्याः मुखे म्लानतायाः लेशोऽपि नासीत्।

अग्निदेवः रामम् उक्तवान्– ''हे राम, एषा भवतः सहधर्मिणी कमपि अपराधं न कृतवती। एषा भवन्तं विना अन्यं मनसा अपि न चिन्तितवती। रावणः एतां बन्धने स्थापयित्वा विविधाः आशाः उत्पादितवान्। एषा केनापि उपायेन वशीकरणीया एव इति रावणस्य दृढसङ्कल्पः आसीत्। अतः सः एतस्याः मनसः परिवर्तनार्थं सामः, दानं, दण्डः, भेदः इति चतुरः उपायान् अपि आश्रितवान्। 'भवतीयत् इच्छति तत् ऐश्वर्यं ददामि' इति उक्तवान् सः। समग्रं जगत् एव भवदधीनं करिष्यामि इति उक्तवान्। बहुविधभोगसाधनानां लोभं प्रदर्शितवान्। ततः एतां तर्जितवान्, मारयामि इति उक्तवान्। राक्षसीनां द्वारा तथा वाचितवान्। एवं शतशः उपायाः आश्रिताः रावणेन। तथापि एषा रावणं तिरस्कृतवती। एतां भवान् परिगृह्णातु। एषा मम आज्ञा'' इति।

अग्निदेवस्य वचनं श्रुत्वा रामः समाधानं प्राप्तवान्। एतादृशीं पतिव्रतां वृथा अग्निप्रवेशं कारितवान् इति चिन्तयन् दुःखम् अनुभूतवान् सः। अनन्तरं सः अग्निदेवम् उक्तवान्– ''सीता कथमपि दोषभागिनी न इति अहं जानामि। किन्तु एषा बहुकालं यावत् रावणस्य वशे आसीत्। यदि अहम् एतां परीक्षां विना परिगृहीतवान् स्याम्, तर्हि लोकः 'दशरथस्य पुत्रः रामः धर्मसूक्ष्मं न जानाति' इति अवदिष्यत्। जगति सर्वे अपि वस्तुस्थितिं जानीयुः इति उद्देशेन अहं सीताविषये कठोरः जातः। सा कायेन वाचा मनसा च माम् एव





आत्मानम् एव समर्पयितुम् अपि सिद्धाः भवन्ति इति अहं जानामि। एतया दृष्ट्या चिन्तयामः चेत् भवता कृता मम परीक्षा अनुचिता सर्वथा न। मया एतादृशी परीक्षा सम्मुखीकरणीया इति विधिना प्रायः मम ललाटे लिखितम् आसीत्। अतः एतत्सर्वं प्रवृत्तम्। अलं चिन्तया'' इति।

एवंप्रकारेण सीतारामयोः पुनः मेलनेन तत्र सम्मिलिताः वानराः बिभीषणादयः सर्वे सन्तुष्टाः।

तस्मिन् समये दशरथः स्वर्गात् दिव्यविमानयानेन तत्र आगतवान्। पितुः दर्शनेन सन्तुष्टौ रामलक्ष्मणौ तं नमस्कृतवन्तौ। दशरथः आत्मीयं पुत्रं रामम् आलिङ्ग्य एवम् उक्तवान्– ''हे वत्स, स्वर्गे देवर्षयः मां गौरवेण पश्यन्ति, आनन्दयन्ति च। तथापि भवतः विरहात् तप्तः अहं दुःखम् एव अनुभवामि। शत्रून् संहृत्य वनवासं समापितवतः भवतः दर्शनेन अहम् अत्यन्तं सन्तुष्टः अस्मि। मद्द्वारा कैकेयी भवन्तं अरण्यं प्रेषितवती। तस्मात् इदानीम् अपि अहं सङ्कटम् अनुभवन् अस्मि। रावणः भवता मारणीयः इति कारणतः एव देवताः भवतः पट्टाभिषेके विघ्नम् आचरितवत्यः इति भाति। अयोध्यागमनेन भवतः माता सन्तुष्टा भविष्यति। अतः इदानीं भवान् अयोध्यां गत्वा राज्यपालनं कुर्वन् अनुजैः सह सुखेन जीवतु'' इति।

ध्यायति इति अहं जानामि एव। भवतः आज्ञां शिरसा पालयामि अहम्'' इति।

अनन्तरं रामः सीतायाः समीपं गत्वा सविषादम् उक्तवान्– ''सीते, अग्निदेवेन सह प्रवृत्तं वार्तालापं श्रुतवती खलु। भवत्याः पवित्रतायाः विषये मम सन्देहः नास्ति एव। किन्तु प्रपञ्चः भवत्याः पातिव्रत्यं जानातु इति तथा व्यवहृतवान् अहम्। भवतीं बहु खेदितवान्। क्षम्यताम्'' इति।

तदा सीता मन्दहासपूर्वकम् उक्तवती– ''प्रभो, भवतः विषये मम महान् विश्वासः अस्ति। अहं जानामि यत् रघुवंशीयानां यदि भयं स्यात् तर्हि तत् लोकापवादमात्रात् इति। रघुवंशीयाः लोकापवादस्य निवारणार्थम्

तदा रामः पितरं नमस्कृत्य उक्तवान्– "माता कैकेयी यदा मम वनवासम् इष्टवती तदा मम विरहात् दुःखितः भवान् कैकेयीं भरतं च त्यजामि इति उक्तवान् आसीत्। भवतः तादृशकटुवचनं श्रुत्वा माता कैकेयी कियत् दुःखम् अनुभूतवती स्यात्। इदानीं तौ अनुगृह्णातु कृपया" इति।

दशरथः रामस्य वचनम् अङ्गीकृत्य "तथास्तु" इति उक्त्वा लक्ष्मणं प्रीत्या आलिङ्ग्य लक्ष्मणेन रामविषये कृतां सेवां प्रशंसितवान्।

अनन्तरम् सीताम् उद्दिश्य– "भवत्याः विषये रामः संशयं प्रकटितवान् आसीत् इति कारणतः पत्युः विषये कुपिता मा भवतु" इत्युक्त्वा स्वर्गं प्रति गतवान्।

अनन्तरं इन्द्रः रामम् उक्तवान्– "वरं पृच्छतु" इति। तदा रामः प्रार्थितवान्– "मत्कारणतः ये वानराः प्राणान् त्यक्तवन्तः तेभ्यः प्राणदानं करोतु" इति। इन्द्रः अनुगृहीतवान्। अनुक्षणं युद्धरङ्गे मृताः सर्वे निद्रातः इव उत्थितवन्तः। एतेन सर्वे आनन्दिताः।

अनन्तरदिने प्रभाते एव विभीषणः रामस्य स्नानार्थम् जलम् आनीतवान्। सुगन्धद्रव्यादीनि वस्त्राणि च आनीतवान्। स्नानस्य व्यवस्थां दृष्ट्वा रामः विभीषणम् उक्तवान्– "सुग्रीवादीनाम् स्नानार्थं सिद्धतां करोतु। मया अस्मिन् एव क्षणे अयोध्या



गन्तव्या। 'चतुर्दशवर्षाणाम् वनवासस्य समाप्तेः अनन्तरम् अपि यदि रामस्य मुखदर्शनं न भविष्यति, तर्हि अग्निप्रवेशं करिष्यामि' इति अनुजः भरतः उक्तवान् अस्ति। अतः यावच्छक्यं तावच्छीघ्रं मया भरतः द्रष्टव्यः" इति।

तदा विभीषणः उक्तवान्– "राम, एकदिनाभ्यन्तरे एव अहं भवन्तम् अयोध्यां प्रापयिष्यामि। कुबेरतः रावणेन प्राप्तं पुष्पकविमानम् अस्ति। तेन यानेन गन्तुं शक्यते। भवता सीतया लक्ष्मणेन च मम सत्कारः स्वीकारणीयः इति प्रार्थयामि" इति।

तदा रामः उक्तवान्– "हे विभीषण, युद्धरङ्गे भवान् साहाय्यम् आचरितवान्



इत्येषः एव मम महान् सत्कारः। चित्रकूटपर्वतं प्रति आगतं भरतं द्रष्टुं मम मनः अभिलषति। अपि च मातॄः, वसिष्ठादिगुरून्, स्नेहितान्, नगरवासिनः च द्रष्टुं मम मनः त्वरते। अतः एतत्क्षणे एव पुष्पकविमानम् अत्र आनाययतु। शीघ्रं गन्तुं कृपया अनुज्ञां ददातु'' इति।

अपरक्षणे एव विभीषणः पुष्पकविमानम् आनीतवान्। पुष्पगुच्छैः अलङ्कृतं विमानं रामाय दर्शयन् उक्तवान् सः– ''प्रभो, एतेन पुष्पकविमानेन वयं मनोवेगेन गन्तुं शक्नुमः। अतः भवान् शीघ्रम् अयोध्यां प्राप्तुं शक्नोति। मया अन्यत् किं करणीयम् इति आज्ञापयतु'' इति।

तदा ''वानराः महत् साहाय्यं कृतवन्तः। देवताभिः अपि वशीकर्तुम् अशक्यं लङ्कानगरं वानराणां साहाय्येन अस्माभिः प्राप्तम् अस्ति। तैः प्रतिफलम् अपेक्ष्य साहाय्यं न कृतम्। अतः तेषां स्मरणम् अस्माकं कर्तव्यम्। तेषां श्रमस्य योग्यं प्रतिफलम् अस्माभिः दातव्यम्। अतः वस्त्रादिभिः आभरणैः च तान् वानरान् सत्करोतु। तेन ते सन्तुष्टाः भवन्ति।'' इति उक्तवान् रामः।

रामस्य वचनानुसारं विभीषणः वानरवीरान् सत्कृतवान्। अनन्तरं सीता-लक्ष्मणाभ्यां सह पुष्पकम् आरुह्य रामः विभीषणादीन् उक्तवान्– ''भवतां साहाय्यतः कार्यं सफलं जातम्। इतः परं भवन्तः गन्तुम् अर्हन्ति। सुग्रीव, भवान् बन्धुत्वेन मित्रत्वेन च यथाशक्ति साहाय्यं कृतवान्। भवान् भवतः सेनया सह किष्किन्धां गत्वा सुखेन जीवतु। विभीषण, भवान् लङ्काराज्यं सम्यक् पालयतु। भवन्तः देवताः न पीडयेयुः अयोध्यां गन्तुं मह्यम् अनुज्ञां यच्छन्तु'' इति।

रामस्य वचनं श्रुत्वा सुग्रीवविभीषणादयः रामम् उक्तवन्तः– ''वयम् अपि भवता सह अयोध्याम् आगन्तुम् इच्छामः। अतः कृपया अस्मान् अपि नयतु। तत्रत्यानां प्रजानां यथा क्लेशः न भवेत् तथा वयम् अरण्ये नगरेषु च सञ्चरामः। भवतः पट्टाभिषेकं दृष्ट्वा कौसल्यादेवीं नमस्कृत्य वयं

प्रत्यागमिष्यामः" इति।

तदा "भवन्तः सर्वे मया सह आगच्छन्ति चेत् तत् मम सन्तोषाय एव। भवन्तः सर्वे अपि एतेन एव पुष्पकेण आगच्छन्तु" इति उक्तवान् रामः।

सुग्रीवविभीषणादयः यदा पुष्पकम् आरूढवन्तः तदा पुष्पकविमानं प्रस्थितम्। विमानं वायुवेगेन गच्छत् आसीत्। तदा रामः सीतायै लङ्कानगरं, रक्तेन आर्द्रां युद्धभूमिं, रावणस्य मरणस्थलं, समुद्रं, किष्किन्धानगरं, वालिनः मरणस्थलं च प्रदर्शितवान्।

तदा सीता रामम् उक्तवती– "अयोध्याप्रवेशसमये मया सह सुग्रीस्य पत्नी तारा वानरप्रमुखाणां पत्न्यः च भवेयुः इति मम निवेदनम्" इति।

रामः तस्याः वचनम् अङ्गीकृत्य पुष्पकं किष्किन्धायां स्थगयित्वा सुग्रीवम् उक्तवान्– "भवतः पत्नी अन्याः स्त्रियः च अयोध्याम् आगच्छेयुः इति सीतायाः इच्छा। अतः ताः सूचयंतु" इति।

तदा सुग्रीवः तारासमीपं गत्वा "भवतीं इतरस्त्रीः च अयोध्याम् आगन्तुं रामः आज्ञापितवान् अस्ति। अतः अनुक्षणं प्रस्थातव्यं भवतीभिः" इति।

तारा अलङ्कारं समाप्य इतराः वानरस्त्रीः उद्दिश्य उक्तवती– "वयम् अयोध्यां गत्वा तत्रत्यान् विशेषान् दृष्ट्वा आगच्छाम। प्रस्थानं कुर्वन्तु" इति।

अलङ्कृताः वानरस्त्रियः सीतां द्रष्टुम् इच्छन्त्यः ताराम् अनुसृतवत्यः। पुष्पकम् आरुह्य प्रयाणं कृतवत्यः। पुष्पकविमाने रामः स्व-सुग्रीवयोः मेलनस्थलं, सुन्दरं पम्पासरोवरं, सीताविरहेण यापितं प्रदेशं, कबन्धस्य वध्यस्थलं, अन्यान् प्रदेशान् चापि दर्शितवान्।

पुष्पकविमानम् अत्रिमहर्षेः आश्रमम् अतिक्रम्य, चित्रकूटम् अपि अतिक्रम्य भरद्वाजाश्रमस्य उपरि डयमानं सत् आयोध्यानगरं प्राप्नोत्।






# श्रेयस्करी वृत्तिः

अनुराधा बाल्ये एव मातृविहीना जाता आसीत्। पिता दुर्गानामिकां काञ्चित् पुनः परिणीतवान् आसीत्। ततः अनुराधा मातामहीगृहे एव प्रवृद्धा। मातामही तां महत्या प्रीत्या पोषितवती। अनुराधा षोडशवर्षीया जाता।

अनुराधायाः विमातुः दुर्गायाः स्वभावः कठोरः आसीत्। कदाचित् सा भोजनार्थम् उपविष्टं पतिम् उक्तवती– "भवतः प्रिया पुत्री तस्याः वृद्धायाः गृहे महाराज्ञी इव सुखेन वर्धमाना अस्ति। विवाहसमये यदि सा पाकादिषु गृहकार्येषु निपुणा न भवेत् तर्हि जनाः मां खलु निन्दन्ति? अतः भवान् पुत्रीम् अत्र आनाययतु। तेन मयापि गृहकार्येषु साहाय्यं प्राप्तं भविष्यति। अनन्तरं तस्याः विवाहविषये चिन्तयिष्यावः" इति।

दुर्गायाः पतिः पत्न्याः वचनं शिरसा वहन् पुत्रीम् अनुराधां गृहम् आनायितवान्। एतावन्ति वर्षाणि प्रीत्या प्रवृद्धा अनुराधा इदानीं विमातुः निन्दनं ताडनं च सहमाना अश्रूणि स्रावयन्ती दिनानि यापयति।

दुर्गायाः सहोदरः नगरे आसीत्। तस्य मित्रं राजारामः। दुर्गा पतिं बोधितवती यत् राजारामः वरदक्षिणां किमपि अनिच्छन् दुर्गां परिणेतुं सिद्धः अस्ति, अतः तस्मै एव अनुराधां दास्यामः इति। विना विचारम् एतत् वचनम् अङ्गीकृतवान् तस्याः पतिः। वस्तुतः तु चौर्यवृत्त्या जीवति स्म राजारामः। एतं विषयं जानाति स्म अपि दुर्गा।

विवाहात् पूर्वं राजारामः उक्तवान् आसीत् यत् नगरे मम उत्तमः उद्योगः अस्ति इति। किन्तु विवाहानन्तरं पत्या सह नगरं गता अनुराधा सप्ताहाभ्यन्तरे एव ज्ञातवती यत् पत्युः उद्योगः कीदृशः इति।

''आग्रहः''



"वञ्चनया प्राप्तेन धनेन शान्तिः सुखं च न प्राप्यते। अतः परिश्रमेण जीवनं वरम्। एतदर्थम् उचितं मार्गम् अन्विष्यतु" इति कदाचित् पतिं बोधितवती अनुराधा।

एतत् श्रुत्वा उपहासपूर्वकम् उक्तवान् राजारामः– "ये सुखजीवनमार्गं न जानन्ति ते परिश्रमं कुर्वन्ति। अहं तु तादृशः मूर्खः न, येन भवत्याः वचनम् अङ्गीकुर्याम्" इति।

अनुराधायाः नगरं प्रति आगमनस्य अनन्तरं षट् मासाः अतीताः। कदाचित् तया वार्ता प्राप्ता यत् मातामही दौहित्र्याः अन्तिमदर्शनार्थं कातरा अस्ति इति। अनुराधा झटिति एकं भाटकशकटम् आरुह्य मातामह्याः गृहं गतवती। तत्र दयनीयावस्थाम् आपन्ना मातामही दृष्टा तया। मातामह्याः दुरवस्थां दृष्टवत्याः अनुराधायाः नेत्राभ्याम् अश्रुधारा निर्गता।

मातामही अनुराधायाः गार्हस्थ्यजीवन-विषये पृष्टवती। अनुराधा वस्तुस्थितिं विस्तरेण निवेदितवती। सर्वं श्रुत्वा वृद्धा दुःखेन– "वत्से! सर्वं ललाटलिखितम्! प्रवृत्तस्य विषये चिन्तया न किमपि प्रयोजनम्। मम अन्तिमक्षणः आसन्नः अस्ति इति अहं जानामि। एकोत्तरैकादशशतं रूप्यकाणि उपायनरूपेण दत्तानि चेत् शुभं भवति इति श्रूयते। अतः तावत् धनं भवत्यै दास्यामि। एतत् धनं भवती पत्ये दत्त्वा तं वदतु यत् एतस्य धनस्य आधारेण किमपि वाणिज्यं करणीयम् इति" इति उक्त्वा एकं धनग्रन्थिम् अनुराधायै दत्तवती। ततः अल्पे एव काले सा प्राणैः वियुक्ता अभवत्।

अनन्तरम् अनुराधायाः पिता आगत्य वृद्धायाः अन्त्यसंस्कारं निर्वर्तितवान्। धनग्रन्थिना सह पतिगृहम् आगता अनुराधा पतिम् उक्तवती– "आवयोः हितम् इच्छन्ती मम पितामही एकोत्तरैकादशशतं रूप्यकाणि दत्तवती अस्ति। एतत् धनं मूलधनत्वेन उपयुज्य यदि श्रद्धया परिश्रमेण च वाणिज्यं क्रियेत तर्हि वर्षाभ्यन्तरे दशसहस्रं रूप्यकाणि प्राप्तुं शक्यन्ते" इति।

तदा राजारामः हसन् उक्तवान्– "दशसहस्रं रूप्यकाणि प्राप्तुं वर्षात्मकः

कालः किमर्थम्? एतत् धनं मह्यं ददातु। एकदिनाभ्यन्तरे अहं तावत् धनं सम्पाद्य आगमिष्यामि'' इति।

ततः सः मध्याह्नसमये तं धनग्रन्थिं कोषे संस्थाप्य गृहात् निर्गतवान्। अनतिदूरं यदा गतं तदा किञ्चन अश्वशकटं तस्य पुरतः आगत्य स्थितम्।

शकटे उपविष्टः कश्चन पुरुषः स्वशिरः बहिः प्रसार्य– ''भोः, मन्दिरं गन्तुं कः मार्गः? यदि भवतः विशेषकार्यं त्वरया करणीयं न स्यात् तर्हि भवान् मया सह शकटे उपविश्य मन्दिरगमनमार्गं प्रदर्शयतु कृपया। अहम्, एषः शकटचालकश्च ऐदम्प्राथम्येन एतं ग्रामम् आगच्छन्तौ स्वः'' इति उक्तवान् सः शकटस्थः पुरुषः।

राजारामः शकटे उपविष्टवान्। काले काले शकटचालकं मार्गं बोधितवान् च। यदा मन्दिरसमीपं शकटं गतं तदा शकटस्वामी शकटात् अवतीर्णः। राजारामं धन्यवाद-वचनानि उक्त्वा वेगेन ततः निर्गतवान् च।

यावत् राजारामः शकटात् अवतरितुम् उद्युक्तः तावता तेन शकटे किमपि पत्रं दृष्टम्। 'पत्रे किं स्यात् इति द्रष्टव्यम्' इति कुतूहलम् उत्पन्नं राजारामस्य। सः पत्रम् उद्घाट्य पठितवान्। तच्च पत्रं नीलकण्ठनामकेन भानुमतीनामिकायै स्वपत्न्यै लिखितम् आसीत्। पत्रे एवम् आसीत् ''अहं कार्यार्थं नगरं गच्छन् अस्मि। भवती वदति स्म खलु– पञ्चाशत्सहस्रं रूप्यकाणि दत्त्वा स्वीकृतः हारः न रोचते





इत्यतः पतिवर्तनीयः इति? भवती एतस्मिन् समये देव्याः मन्दिरे भवति इति जानन् अहम् एतत् पत्रं प्रेषयन् अस्मि। यः एतत् पत्रम् आनयति तद्द्वारा भवती तं हारं प्रेषयतु। नगरतः अहम् अन्यं हारम् आनेष्यामि" इति।

एतत् पठितवता राजारामेण महान् सन्तोषः प्राप्तः। सः वेगेन मन्दिरं गतवान्। आढ्या इव दृश्यमाना काचित् मन्दिरस्य स्तम्भस्य पार्श्वे उपविष्टा आसीत्। राजारामः तस्याः समीपं गत्वा पृष्टवान्– "भानुमतीवर्या भवती एव खलु?" इति।

'आम्' इति वदन्ती सा महिला शिरः चालितवती। राजारामः तस्यै तत् पत्रं दत्तवान्। पत्रं पठित्वा सा उक्तवती– "अत्र आगमनात् पूर्वम् एव अहं तं हारं पार्वत्यै दत्तवती आसम्। स्वपुत्र्याः विवाहार्थं सा मत्तः पञ्चदशशतं रूप्यकाणि इष्टवती। किन्तु तावत् धनं मम समीपे न आसीत्। सा मां प्रार्थितवती यत् भवती स्वस्य हारं मह्यं ददातु, यं च अहम् आधिरूपेण निक्षिप्य ऋणं प्राप्स्यामि, मासद्वयाभ्यन्तरे हारं प्रत्यर्पयिष्यामि च इति। अतः अहं तस्यै हारं दत्तवती। अतः भवान् मम आर्यपुत्रं वदतु यत् अग्रिमसन्दर्भे यदा नगरं प्रति गम्यते तदा हारपरिवर्तनं कर्तुं शक्यते इति" इति।

'सुवर्णावसरः च्युतः जायमानः अस्ति' इति चिन्तयन् राजारामः खेदं प्राप्तवान्। क्षणकालस्य आलोचनस्य अनन्तरम् सः एकम् उपायं रचितवान्। सः तां महिलाम् उक्तवान्– "स्वामी पुनः कदा नगरं गमिष्यति इति तु न ज्ञायते। मम समीपे एकाधिकैकादशसहस्रं रूप्यकाणि सन्ति। एतावत् धनं पार्वत्यै दत्त्वा भवती तं हारं प्रतिस्वीकरोतु। धनम् अहम् अनन्तरकाले नीलकण्ठवर्यात् प्राप्स्यामि" इति।

भानुमती "अस्तु" इति उक्त्वा ततः गतवती। त्रिचतुरनिमेषाभ्यन्तरे सा प्रत्यागतवती। एकं हारं राजारामाय यच्छन्ती सा उक्तवती– "भागिनेय्याः शोभायाः कण्ठे यादृशः हारः गतसप्ताहे विवाहसमये दृष्टः, तादृशः एव हारः आनेतव्यः इति भवतः स्वामिनं वदतु" इति।

भानुमतीतः हारं स्वीकृत्य ततः निर्गतवान् राजारामः। सदा चोरितानि वस्तूनि यस्मै आपणिकाय दीयन्ते तस्य आपणिकस्य समीपं गतवान् आपणिकः हारं परीक्ष्य कोपेन राजारामं पश्यन्– "भोः, कृतकं हारं दत्त्वा 'सुवर्णहारः एषः' इति वदति वा? धिक् भवन्तम्!" इति उक्त्वा हारं दूरे क्षिप्तवान्।

एतस्य वचनस्य श्रवणतः राजारामः वज्रायुधेन आहतः इव। तदीयः प्रयत्नः विफलः जातः आसीत्। 'इतः परं पत्न्यै कथं वा मुखं प्रदर्शयेयम्?' इति चिन्तयन् खेदम् अनुभूतवान् सः।

निराशः राजारामः सायङ्कालपर्यन्तं नगरे इतस्ततः अटितवान्। यदा अन्धकारः प्रसृतः तदा अनन्यगतिकतया सः गृहं गतवान्। किन्तु गृहे दीपः न आसीत्। सः अन्तः गत्वा दीपं ज्वालितवान्। तत्र उत्पीठिकायाः उपरि एकं पत्रं दृष्टम्।

पत्रे एवं लिखितम् आसीत्– "मम सखी भानुमती, तस्याः पतिः नीलकण्ठः च मद्द्वारा भवतः इतिवृत्तं श्रुतवन्तौ आस्ताम्। तौ उपायं रचितवन्तौ। चौर्यवृत्तेः कीदृशः परिणामः इति एतावता भवान् ज्ञातवान् स्यात्। 'चोरस्य पत्नी' इति अपख्यातिं श्रोतुम् अहं न इच्छामि। अहं मरणं वा सन्तोषेण स्वागतीकुर्यां न तु अपख्यातिम्। मातामह्या दत्तं धनं यद्यपि मया भवते दत्तं, तथापि तत् पुनरपि मम हस्तगतं जातम् अस्ति। तेन धनेन अहं धेनुद्वयं क्रीत्वा क्षीरवाणिज्यं करिष्यामि। यदि चौर्यवृत्तिं परित्यज्य परिश्रमेण जीवनं कर्तुम् इच्छा अस्ति तर्हि मातामहीग्रामम् आगच्छतु। तत्र परिश्रमेण कार्यं कृत्वा सुखेन निवसाव" इति।

पत्रपठनतः राजारामस्य अज्ञानम् अपगतम्। 'पत्न्याः वचनस्य अनुगुणं परिश्रमेण जीवनम् एव श्रेयस्करम्' इति निश्चित्य राजारामः अनन्तरदिने प्रातः एव पत्न्या स्थितं ग्रामं प्रति प्रस्थितवान्।

गृहस्य पुरतः स्थितं पतिं सन्तोषेण आदरेण च स्वागतीकृतवती अनुराधा।





# ईर्ष्याफलम्

बलभद्रः नाम कश्चन निर्धनः पुरुषः पूर्वम् आसीत्। तस्य पुत्राः बहवः। काष्ठविक्रयणवृत्त्या जीवति स्म बलभद्रः।

कदाचित् प्रातः बलभद्रः परशुं गृहीत्वा अरण्यं प्रति प्रस्थितवान्। मध्येमार्गं महती वृष्टिः आरब्धा। यावत् अरण्यं प्राप्तं तावता धाराकारवृष्टिः एव आरब्धा। सौभाग्यवशात् बलभद्रेण अनतिदूरे एकं जीर्णं भवनं दृष्टम्। बलभद्रः धावन् गत्वा तस्य भवनस्य अन्तः स्थितवान्।

वृष्टिः शीघ्रं न स्थगिता। 'अहो वृष्टिः! एतावता सर्वाणि काष्ठानि आर्द्राणि जातानि। आर्द्राणि काष्ठानि नीतानि चेत् को वा क्रीणीयात्? काष्ठानां विक्रयणं न जातं चेत् अद्य मम गृहसदस्यानाम् उपवासः एव शरणम्' इति चिन्तयन् बलभद्रः परितः दृष्टिं प्रसारितवान्। भवने अनतिदूरे कश्चन काष्ठविग्रहः तेन दृष्टः। आशया विग्रहस्य समीपं गतवान् बलभद्रः।

स च कश्चन देव्याः विग्रहः आसीत्। 'एषः विग्रहः देवस्य भवतु, देव्याः वा, किं तेन मम? एषः विग्रहः तु न आर्द्रः। यदि एतस्य भेदनं कुर्यां तर्हि प्रभूतं काष्ठं प्राप्नुयाम्। तेन गृहसदस्याः किञ्चित् वा यवागूं पातुं शक्नुयुः' इति आलोचितवान् बलभद्रः।

अनन्तरं सः परशुम् उन्नीय विग्रहच्छेदनार्थम् उद्युक्तः। तावता विग्रहमुखात् कश्चन स्वरः निर्गतः– "अये, तिष्ठतु तावत्! मम शिरसः भङ्गं कर्तुम् उद्युक्तः खलु भवान्! कीदृशं दुष्कृत्यं भवतः? कीदृशी अविवेकिता!" इति।

बलभद्रः झटिति परशुम् अधः आनीय विग्रहं नमस्कृत्य क्षमाप्रार्थनस्वरेण– "अम्ब! क्षन्तव्यः अहम्। भवती अत्र

निवसति इति अहं न जानामि स्म। शुष्कः विग्रहः एषः इति मत्वा विग्रहच्छेदनार्थम् अहम् उद्युक्तः। वृष्टिकारणतः समग्रे अरण्ये काष्ठानि आर्द्राणि सन्ति। शुष्कः काष्ठमयः विग्रहः यः प्राप्तः तत्र भवती निवसति। इतः परं का गतिः मम? अद्य मम गृहे उपवासः एव शरणम्। बुभुक्षापिशाच्याः अद्य नृत्यम्! धिक् माम्! पत्नीपुत्रादिभ्यः यवागूमात्रम् अपि दातुम् अशक्नुवतः मम दरिद्रजीवनं धिक्!" इति वदन् स्वदारिद्र्यस्य निन्दनं कृतवान्।

"वत्स! भवतः कष्टम् अवगच्छामि अहम्। भवद्विषये कोऽपि कोपः नास्ति मम। भवन्तम् एतस्मिन् अरण्ये प्रतिदिनम् अहं पश्यामि। भवतः परिश्रमशीलतां निर्धनतां चापि जानामि। दारिद्र्यं घोरम् अकृत्यं कारयति। अतः एव मम च्छेदने भवतः मतिः उत्पन्ना। अस्तु तावत्। भवतः दारिद्र्यम् अहं निवारयिष्यामि। भवान् गृहं गत्वा नूतनं मृत्पात्रं चुल्लेः उपरि स्थापयतु। तत्समनन्तरम् एव तत्र अपेक्षितः आहारः दृष्टिगोचरः भवति। इतः परं भवत्परिवारेण भोजनार्थं कष्टम् अनुभोक्तव्यं नास्ति" इति उक्तवती विग्रहस्था देवी।

एतेन सन्तुष्टः बलभद्रः विग्रहं नमस्कृत्य वृष्टिम् अपि अविगणयन् गृहं गतवान्।

रिक्तहस्ततया आगतं पतिं दृष्ट्वा पत्नी आश्चर्येण पृष्टवती– "अद्य काष्ठानि सङ्गृह्य न आनीतानि वा? अद्य सर्वेषां किम् उपवासः एव शरणम्?" इति।

"अये, अलं चिन्तया। देवी अस्मान्





अनुगृहीतवती अस्ति। अस्माकं सर्वाणि कष्टानि परिहृतानि'' इति वदन् बलभद्रः अरण्ये प्रवृत्तं समग्रं पत्नीं निवेदितवान्।

पत्युः सूचनायाः अनुगुणं पत्नी नूतनं मृत्पात्रम् आनीय आवरणेन तत् पिधाय चुल्लेः उपरि स्थापितवती। क्षणकालस्य अनन्तरम् अधः स्थापितवती च। तावता पात्रे विविधाः आहाराः, भक्ष्याणि च तत्र प्रत्यक्षं जातानि आसन्। पतिः, पत्नी, पुत्राः च सन्तोषेण भोजनं कृत्वा तृप्त्या निद्रां कृतवन्तः।

तस्मात् दिनतः बलभद्रकुटुम्बीयैः भोजनार्थं कष्टं न अनुभूतम्। प्रतिदिनं ते षड्रसोपेतं भोजनं कुर्वन्ति स्म। तावदेव न, प्रतिवेशिभ्यः अतिथिभ्यः चापि तादृशम् एव भोजनं यच्छन्ति स्म। बलभद्रः भोजनदाने कदापि कृपणतां अल्पबुद्धितां वा न प्रदर्शयति स्म। अतः अन्नार्थिनः तत्र आगत्य भोजनं प्राप्य तृप्त्या बलभद्रम् आशिषा अनुगृह्य गच्छन्ति स्म।

बलभद्रस्य गृहस्य पार्श्वे अन्यत् गृहम् आसीत्। तत्र मन्दाकिनी नाम गृहिणी निवसति स्म। 'यैः यवागोः ऋते अन्यत् किमपि जीवने न दृष्टं तादृशाः इदानीं प्रतिदिनं षड्रसोपेतं भोजनं कुर्वन्तः सन्ति। एतादृशं सामर्थ्यम् एतैः कथं प्राप्तम्? सम्पत्तेः प्राप्त्यर्थं कः उपायः आश्रितः स्यात्?' इति चिन्तयन्त्याः मन्दाकिन्याः कुतूहलं अधिकं जातम्।

सा बलभद्रस्य कनिष्ठं पुत्रम् आहूय— 'भवतः पिता एषु दिनेषु काष्ठसङ्ग्रहार्थम् अरण्यं न गच्छति इति भाति। तथापि भवतः माता प्रतिदिनं विशेषपाकं करोति खलु? तत् कथम्? तण्डुल-धान्यादयः कथं प्राप्यन्ते?'' इति पृष्टवती।

तदा बलभद्रपुत्रः सहजस्वरेण— ''वस्तुतः मम माता पाकं न करोति। धान्यादयः गृहं प्रति न आनीयन्ते अपि। अरण्यदेवतायाः अनुग्रहतः सर्वम् एतत् सिद्ध्यति'' इति वदन् सर्वं निवेदितवान्।

वस्तुस्थितिं ज्ञातवत्याः मन्दाकिन्याः मनसि महती ईर्ष्या उत्पन्ना। सा शयनप्रकोष्ठं

गत्वा शयनं कृतवती। भोजनसमये यदा बालाः– "अम्ब! भोजनं ददातु" इति उक्तवन्तः तदा सा तान् कोपेन तर्जितवती।

मध्याह्ने गृहम् आगतः पतिः 'पाकः न सिद्धः' इति ज्ञात्वा पत्नीसमीपं गत्वा अनुनयस्वरेण पृष्टवान्– "मन्दाकिनि! किं जातम्?" इति।

"किं जातम् इति? परमदरिद्राः अपि वनदेवतायाः अनुग्रहं सम्पाद्य चुल्लीज्वालनं विनैव षड्रसोपेतं भोजनं प्राप्नुवन्तः सन्ति। एतत् पश्यन्त्या हतभाग्यया मया आदिनं परिश्रमं कृत्वा पाकः करणीयः। अहो दौर्भाग्यं मम" इति रुदती उक्तवती मन्दाकिनी।

पत्नीमुखात् वस्तुस्थितिं ज्ञात्वा पतिः पृष्टवान्– "इदानीं मया किं करणीयम् इति भवत्याः आशयः?" इति।

"इतोऽपि मां पृच्छति खलु– किं करणीयम् इति? परशुं गृहीत्वा अरण्यं गच्छतु। भवत्याः शिरः भञ्जयामि इति उक्त्वा देवीं भाययित्वा ततः अक्षयपात्रं प्राप्य आगच्छतु। इतः परम् अहं पाकं न करिष्यामि एव" इति क्रोधेन उक्तवती मन्दाकिनी।

"देवतायाः शिरसः भञ्जनार्थं प्रयत्नः अविवेकसूचकः खलु?" इति उक्तवान् पतिः।

"धिक् भवतः मूर्खताम्। या प्रार्थिता चेदपि वरं न ददाति सा भायनीया एव। तदा एव वरः प्राप्यते" इति पतिं बोधितवती



मन्दाकिनी।

'पत्न्याः वचनं यदि निराक्रियते तर्हि जीवने शान्तिः लुप्ता भविष्यति' इति जानन् मन्दाकिनीपतिः परशुं स्वीकृत्य अरण्यं प्रति गतवान्। किञ्चित् अन्वेषणं यदा कृतं तदा देव्याः जीर्णं मन्दिरं प्राप्तं तेन। देव्याः विग्रहस्य भञ्जनं न इच्छति स्म सः। तथापि मार्गान्तरस्य अभावात् सः विग्रहस्य समीपं गत्वा भञ्जनार्थं परशुम् उन्नीतवान्।

अपरक्षणे एव भूमिः कम्पिता। विग्रहात् तीक्ष्णा कान्तिः निर्गता। तस्याः कान्तेः तीव्रताकारणतः मन्दाकिनीपतिः अन्धत्वं प्राप्य अधः पतितवान्। तस्य समग्रे शरीरे तीव्रः तापः उत्पन्नः। "अये नीच! मम शिरः

भञ्जयितुम् उद्युक्तस्य भवतः कियत् धार्ष्ट्यम्। मां सामान्यां भावयति वा भवान्? अविवेकिन्! कृतस्य फलम् अनुभवतु" इति कठोरः स्वरः श्रुतः तेन।

"अम्ब! मां क्षाम्यतु कृपया। अज्ञानेन मया एषः अपराधः कृतः। एतादृशं कार्यं कृतवन्तं बलभद्रं भवती अपूर्ववरदानेन अनुगृहीतवती। मयि किमर्थं कोपः भवत्याः?" इति पृष्टवान् मन्दाकिनीपतिः।

"बलभद्रः तु दरिद्रः आसीत्। तदर्थं मया वरः दत्तः? भवते किमर्थं वरः दातव्यः मया?" इति पृष्टवती देवी।

"सः दरिद्रः आसीत्। अहम् अज्ञानी अस्मि। अज्ञानात् कृतः दोषः क्षमार्हः खलु?" इति उक्तवान् मन्दाकिनीपतिः।

"यदि मम एकं नियमं भवान् पालयेत् तर्हि अहं भवन्तं क्षाम्येयम्। बलभद्राय वरं दत्त्वा पात्रात् सर्वविधाः आहाराः यथा प्राप्येरन् तथा अनुगृहीतवती अहम्। किन्तु घृतप्राप्तिमार्गं कल्पयितुं विस्मृतवती। बलभद्रगृहीयाः घृतं विना एव इदानीं भोजनं कुर्वन्तः सन्ति। यदि प्रतिदिनं तद्गृहं प्रति प्रस्थपरिमितस्य घृतस्य दानं भवता अङ्गीक्रियेत तर्हि अहं क्षमां प्रदर्शयेयम्" इति उक्तवती देवी।

"भवती यथा आज्ञापयति तथा अवश्यम् आचरामि। कृपया मयि कृपां प्रदर्शयन्ती मम तापं निवारयतु" इति सदैन्यं प्रार्थितवान् मन्दाकिनीपतिः। अनन्तरक्षणे एव तस्य तापः अपगतः। दृष्टिशक्तिश्चापि प्राप्ता।

'हन्त! अहं रक्षितः' इति स्वगतं वदन् गृहम् आगतवान् मन्दाकिनीपतिः। पत्नीं प्रवृत्तं समग्रं निवेद्य उक्तवान् सः– "अये, भवत्याः उपदेशस्य श्रवणात् एतत्सर्वं प्रवृत्तम्।——प्रतिदिनं बलभद्रस्य गृहं प्रति प्रस्थपरिमितं घृतं प्रेषयतु। अन्यथा देव्याः कोपपात्रं भवेम" इति।

अनन्यगतिका मन्दाकिनी आत्मनः दौर्भाग्यं निन्दन्ती प्रतिदिनं बलभद्रगृहं प्रति घृतस्य प्रेषणस्य आरम्भं कृतवती।



# प्रकृतिवैचित्र्याणि–

## सुवर्णमयः वृक्षः



"अस्मभ्यं सहस्रं रूप्यकाणि दत्त्वा एकम् अर्णवृक्षम् आरोपयन्तु। विंशतिं वर्षाणि यावत् वयं तस्य योगक्षेमं निर्वक्ष्यामः। तदनन्तरं भवन्तः शतगुणितं धनं, तन्नाम लक्षं रूप्यकाणि प्राप्स्यन्ति" इत्येतादृशानि प्रकटनानि एषु दिनेषु तत्र तत्र दृश्यन्ते। एतस्य तात्पर्यं सिद्ध्यति यत् अर्णकाष्ठं सुवर्णतुल्यम् अस्ति इति। एतावतदेव न, थायल्याण्डदेशीयौ उभौ संशोधकौ अर्णवृक्षं सुवर्णात्मकं मन्येते। 'न्यूट्रान् एक्टिवेषन्' नामकेन तन्त्रेण तौ अर्णवृक्षं क्रकचेन कर्तितवन्तौ। ततः ताभ्यां काष्ठधूल्यां सुवर्णांशः प्राप्तः। एतज्जातीयान् वृक्षान् तौ 'साक् तांग्' इति नाम्ना तौ निर्दिष्टवन्तौ। 'साक्' शब्दस्य अर्थः अर्णवृक्षः इति। 'तांग्' शब्दस्य अर्थः च सुवर्णम् इति। दक्षिणे भारते केचन सुवर्णं 'तङ्गम्' नाम्ना निर्दिशन्ति।



## वृक्षप्रकाण्डं परितः पीतवर्णवलयाः!

एषु दिनेषु विविधाः संस्थाः स्थापिताः दृश्यन्ते। किन्तु भवन्तः तादृशीं संस्थां किं श्रुतवन्तः, यस्याः च सदस्याः वृक्षमात्राणि इति? उत्तरप्रदेशराज्ये 'एलैट् मदर् ट्रीस्' नामिका संस्था अस्ति। निम्बः, आम्रः, तिन्त्रिणी, देवदारुः, आमलकः इत्यादयः प्रायः ३,५०० वृक्षाः एतस्याः संस्थायाः सदस्याः सन्ति। एतस्याः संस्थायाः सदस्याः ये भवन्ति ते वृक्षाः उत्तमं बीजं यथा प्राप्नुयुः तथा योग्या व्यवस्था क्रियते। स्वस्थः, सुदृढः, बहुशाखायुक्तः, पर्णसमृद्धियुक्तः च वृक्षः एतस्याः संस्थायाः सदस्यतां प्राप्तुम् अर्हति। एतादृशः वृक्षः 'मातृवृक्षः' (मदर् ट्री) इति उच्यते। सदस्यस्य वृक्षस्य प्रकाण्डं परितः पीतवर्णवलयः लिख्यते। ततः तस्य बीजानि नीत्वा ततः अङ्कुरान् उत्पाद्य परीक्ष्यते। अत्र उत्तीर्णतां प्राप्तवान् वृक्षः 'विशिष्टमातृवृक्षः' इति उच्यते। एतादृशानां वृक्षाणां प्रकाण्डं परितः द्वितीयः पीतवर्णवलयः लिख्यते। अङ्कुरितानि बीजानि अन्यत्र आरोप्यन्ते, ततः उत्पन्नानि सस्यानि यदा सम्यक् प्रवर्धन्ते तदा वृक्षप्रकाण्डं परितः तृतीयः पीतवर्णवलयः लिख्यते।



## उन्नततमः वृक्षः

क्यालिफोर्नियाप्रदेशस्य हम्बोल्ट्स्टेट्-उद्याने स्थितस्य वृक्षस्य औन्नत्यं ११३ मीटरात्मकम्। एषः एव प्रपञ्चे उन्नततमः वृक्षः इति परिगण्यते। एतस्य नाम 'हार्प्कोल्' इति निर्दिष्टम् अस्ति। १९८८ तमे वर्षे अन्विष्टस्य एतस्य वृक्षस्य प्रकाण्डस्थलवलयानां परीक्षणात् ज्ञातं यत् एषः वृक्षः ३,००० वर्षेभ्यः पूर्वम् उत्पन्नः इति। ततः पूर्वं तु भाव्यते स्म यत् आस्ट्रेलियास्थः यूकलिप्टस्वृक्षः एव अत्युन्नतः इति। एवं हि श्रूयते यत् तत्रैव १५३ मीटर्-उन्नतः अपरः यूकलिप्टस्वृक्षः आसीत् इति।

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!














It's time to go back to school again. Time for text books. Time for games. Time to meet old friends. And make new ones. Time to start studying again. Because there's so much to learn about the world around you.

From all of us here at Chandamama, have a great year in school. And remember to tell us what you've learnt everyday, when you come home from school !

THE CHANDAMAMA COLLECTION

ARTIG1246

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां अक्टोबर्-९३ मासे प्रकटयिष्यामः।



M. Natarajan



P.R. Murthy

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्ट्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

### 'जून्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **बालः शमयति आत्मानं पीडयन्तं तापम्।**

द्वितीयचित्रम् - **जनाः पश्यन्ति तापं शमयन्तं मेघम्।**

प्रेषकः - मुनिजयरत्नविजयः, श्रीभाण्डवपुरतीर्थम् (मेगलवा), जालोर्-३४३०२२ (राज०)




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---



एक्को-सहाय्येन मुख-छद्माकृतीः कुरुत!

एक्को-रेखाल्न-लेखन्या (स्केच पेन) मुख-छद्माकृतीनां निर्माणं न केवलं सुकरम्, अपि तु नितरां मनोविनोदनपरमपि।

समुज्ज्वलवर्णाः एक्को-लेखन्यः १२, २४, ३० इति संख्यात्मकेषु आवेष्टनेषु उपलब्धाः सन्ति।

अयं पुनरत्र विशेषः यत् एक्को-लेखन्यः जलाधारिताः निर्विषाश्च भवन्ति।

तस्माद् एव तासाम् उपयोगः सर्वथा सुरक्षितः।

विचार्यतां तावत्, कियान् भवेत् अम्बायाः प्रमोदः युष्माकं छद्माकृतीः विलोकयन्त्याः।

एवं एक्को नाम अक्षय्यः आनन्दः।

विजयिभ्यः सहस्रशः पारितोषिकाणि। एक्को-'बन-बुक-बर्स्' स्पर्धायां सहभागिनः भवत। आवेष्टनैः सह प्रवेशपत्रिकाः सन्ति।




Ekco®

युष्माकं चित्रकलाभिव्यक्तेः सर्वोत्तमं साधनम्।



